मद्यं न रचयेद्भद्रे कलिकाले वरानने ।
पीत्वा पीत्वा पुनः पीत्वा पतित्वा च महीतले ।
उत्थाय च पुनः पीत्वा वचनं सत्य-सम्मतम् ॥ २५ ॥

इति श्रीकालीविलासतन्त्रे षष्ठः पटलः समाप्तः ।

---

# अथ सप्तमः पटलः ।

श्रीदेव उवाच ।

सम्विदा भक्षणं देवि सम्यक् कलियुगे शृणु ।
शुक्लं रक्तं तथा पीतं कृष्णञ्च भक्त[1]मीरितम् ॥ १ ॥
शुक्लपुष्पं ब्राह्मणे च रक्तपुष्पञ्च क्षत्रिये ।
वैश्ये च पीतपुष्पं स्यात् शूद्रे कृष्णमितीरितम् ॥ २ ॥
कलिकाले च लोकानां यदि स्यात् साधन-स्पृहा ।
जिह्वाग्रे निक्षिपेत् किञ्चिन्न बहूनि च भक्षयेत् ॥ ३ ॥
यदि जात्यन्तरं भुङ्क्ते ब्रह्महत्यां लभेत्तदा[2] ।
अथवा शृणु वक्ष्यामि शूद्राणां पाननिर्णयम् ॥ ४ ॥
नारिकेलोदकं कांस्ये तक्रञ्च गुड़संयुतम् ।
आर्द्रकं गुड़संयुक्तं, ताम्रे मधुगुड़ं तथा ॥ ५ ॥
काञ्जिका गुड़संयुक्ता वामहस्ते गुड़ं ततः ।
संशोध्यमूलमन्त्रेण कुशाग्रे वरवर्णिनि ॥ ६ ॥
निक्षिप्य मूलमुच्चार्य्य जिह्वाग्रे सिद्धिदायिनी ।
जिह्वाग्रे निक्षिपेदष्टदिनावधि च पार्व्वति ॥ ७ ॥
मासस्यानन्तरं भद्रे निक्षिपेत् ब्राह्मणादिकम् ।
इति ते कथितं देवि दशविद्यासु सम्मतम् ॥ ८ ॥
शालग्रामशीलाचक्रे पूजयेद् ब्राह्मणः सदा ।
पूजयेत् शिवलिङ्गे वा न यन्त्रे पूजयेत् कलौ ॥ ९ ॥
यन्त्रस्य लिखने[3] पूजा निश्चितं विफला भवेत् ।
पूजकस्यापि तेजांसि हरते योगिनी गणः[4] ॥ १० ॥
पूजने शिवलिङ्गेषु शूद्राणां सम्मतं कलौ ।
गुप्तागुप्ततरापूजा प्रकटा सिद्धिनाशिनी ॥ ११ ॥

---

१ भक्तमित्यस्य विभक्तं इत्यर्थः, शुक्लादिभेदेन सम्विदा चतुर्विधा इति भावः ।
२ "लभेत्तदा" इत्यत्र "लभेद्ध्रुवं" इति पाठान्तरम् ।
३ "लिखने" इत्यत्र "पूजने" इति पाठान्तरं, अत्र लिखनपदस्य पूजार्थत्वम् ।
४ "योगिनी गणः" इत्यत्र "भैरवः स्वयं" इति पाठान्तरम् ।

अन्तःशाक्ता वहिः शैवाः सभायां वैष्णवा मताः ।
नानारूपधराः कौला विचरन्ति महीतले ॥ १२ ॥
विधृत्य तुलसीमालां तिलकं हरिमन्दिरम् ।
कथोपकथनं देवि श्रीहरेर्गुणकीर्त्तनम् ॥ १३ ॥
इष्टमन्त्रे मनो दत्त्वा प्रजपेदनिशं मनुम् ।
वैष्णवाचारसंयुक्त इष्टमन्त्रं सदाभ्यसेत् ॥ १४ ॥
तदासिद्धो भवेन्मन्त्रो नात्रकार्य्या विचारणा ।
सामान्यविधिना पूजा कलिकालेषु सम्मता ॥ १५ ॥
सामान्यविधिना सर्व्वं शतनामानि सम्पठेत् ।
न्यासश्च मातृकान्यासः कलिकालस्य सम्मतः ॥ १६ ॥
मातृका न्यासमात्रेण सर्व्वसिद्धीश्वरो भवेत् ।
कृत्वा श्रीमातृकाजालं प्राणायामफलं लभेत् ॥ १७ ॥

इति श्रीकालीविलासतन्त्रे सप्तमः पटलः समाप्तः ।

# अथाष्टमः पटलः ।

श्रीदेव्युवाच ।

कथ्यतां मे महादेव प्राणायामविनिर्णयः ।
मनोजीवात्मना शुद्धिः प्राणायामाद्भवेद् यदि ॥ १ ॥
प्राणायामपरं किञ्चिद् ध्यानं नास्ति वरानने ।
प्राणापानौ समानश्च उदानोव्यान एव च ॥ २ ॥
नागः कूर्म्मोऽथ क्रकरो देवदत्तो धनञ्जयः ।
प्राणायामे च सर्वेषां विश्रामो जायते ध्रुवम् ॥ ३ ॥
प्राणायामत्रयं भद्रे उत्तमाधममध्यमम् ।
अधमाज्जायते स्वेदो मध्यमाद् गात्रकम्पनम् ॥ ४ ॥
उत्तमाच्च चितित्यागो जायते नात्रसंशयः ।
जायते मातृकाज्ञानात् प्राणायामत्रयं फलम् ॥ ५ ॥
इति ते कथितो देवि प्राणायामविनिर्णयः ।
ज्ञात्वा सिद्धीश्वरो लोको भवतीति विनिश्चयः ॥ ६ ॥

इति श्रीकालीविलासतन्त्रेऽष्टमः पटलः समाप्तः ।

---

# अथ नवमः पटलः ।

श्रीतत्पुरुष उवाच[1] ।

किं बहूक्त्या महेशानि गुरुभक्त्या न सिद्ध्यति ।
सङ्केतं स्तवमज्ञात्वा विफलं पूजनं जपः ॥ १ ॥
नाम सङ्केतकञ्चैव गुरुसङ्केतकं तथा ।
मन्त्रसङ्केतकञ्चैव कालसङ्केतकं तथा ॥ २ ॥
चारसङ्केतकञ्चैव विना सिद्धि र्न जायते ।
तदुक्तं कुलतन्त्रे च सङ्केतमुत्तमं स्तवम् ॥ ३ ॥
पठित्वा परमेशानि चतुर्व्वर्गफलं लभेत् ।
त्रिसन्ध्यं यः पठेत् स्तोत्रं सङ्केतसिद्धिमुत्तमम् ॥ ४ ॥
स सिद्धः स महेशोऽपि[2] अष्टैश्वर्य्यमयः सदा ।
स एव धन्यो यस्यार्थे महेशो व्यग्रमानसः ॥ ५ ॥
लक्षावर्त्तनमात्रेण पुरश्चर्य्याफलं लभेत् ।
कलौ होमो महेशानि नास्ति नास्ति कदाचन ॥ ६ ॥
कलिकाले महेशानि शिवपूजाफलप्रदा ।
सहस्रपूजनाद्देवि पुरश्चर्य्याफलं लभेत् ॥ ७ ॥
एवं द्विदशसाहस्रं शिवतन्त्रमतं प्रिये ।
कृत्वा सिद्धेश्वरो देवि विहरेत् क्षितिमण्डले ॥ ८ ॥
स एव पृथिवीपालो भूत्वा याति परत्र च ।
यः शिवः सैव दुर्गा स्यात् या दुर्गा शिव एव सः ॥ ९ ॥
यः शिवः कृष्ण एव स्यात् यः कृष्णः शिव एव सः ।
तत्र यः कुरुते भेदं स एव नारकी भवेत् ॥ १० ॥

इति श्रीकालीविलासतन्त्रे नवमः पटलः समाप्तः ।

---

१ "श्रीतत्पुरुष उवाच" इति पाठः क्वचित् पुस्तके नास्ति ।
२ "महेशोऽपि" इत्यत्र "गणेशोपि" इति पाठान्तरम् ।

## अथ दशमः पटलः ।

श्रीदेव्युवाच ।

देवदेव महादेव योगीन्द्र वृषभध्वज ।
अस्याः श्रीभुवनेश्वर्य्याः शतनाम वद प्रभो ॥ १ ॥

श्रीईशान उवाच ।

सहस्रेण महेशानि कलिकाले न सिद्ध्यति ।
शतनाम्नः परं नाम कलौ नास्ति महेश्वरि ॥ २ ॥

अस्य श्रीभुवनेश्वरी शतनामस्तोत्रस्य शक्तिर्ऋषि
विराट्च्छन्दः श्रीभुवनेश्वरी देवता चतु-
र्व्वर्गसिद्ध्यर्थे विनियोगः ।

( ॐ ) आद्या श्रीभुवनाभद्या, भवबन्धविमोहिनी ।
भगरूपा भगवती भेरुण्डा भाग्यशालिनी ॥ ३ ॥
ईश्वरी ईश्वरानन्दा वन्दनीया विलासिनी ।
उमा ऊमा च[1] उन्मत्ता इन्दिरा इन्द्रपूजिता ॥ ४ ॥
ऊर्द्ध-तेजस्विनी ऊर्द्धा ऊर्द्धगा ऊर्द्धरूपिणी ।
नन्दिनी नन्दमथिनी नन्दा नन्दकरूपिणी ॥ ५ ॥
नित्या च निष्कलङ्का च निर्म्मला मलनाशिनी ।
निरीहोल्लासिनी नत्या निर्म्मला नित्यनूतना[2] ॥ ६ ॥
निशुम्भनाशिनी चैव तथा शुम्भविनाशिनी ।
शुक्लरूपा च शुक्लाहा शाम्भवी शम्भुवल्लभा ॥ ७ ॥
शिवाख्या शिवरूपा च शिवपूज्या शिवार्च्चिता ।
शिववादा[3] च श्यामा च श्यामाङ्गी श्याममूर्त्तिका ॥ ८ ॥

१ ऊशब्देनात्र शिव उच्यते तेन तस्य माता इत्यर्थः । "उमा ऊमा" इत्यत्र "उमारूपा इति क्वचित् पुस्तके पाठः ।

२ "नूतना" इत्यत्र 'सुत्तमा" इति क्वचित् पुस्तके पाठः । क्वचिच्च "निर्ल्लज्जा निर्घृणा निद्रा निश्चला निरुप-द्रवा" । इत्यधिकः श्लोकार्द्धं दृश्यते ।

३ "शिववादा" इत्यत्र शववादा" इति क्वचित् पुस्तके पाठः, तस्यार्थस्तु शवेन सह वादः कथोपकथनं यस्याः, अथवा शवः शिवरूपः शव इति तात्पर्य्यम् ।

शोभा च सुभगा चैव शोभना भुवनेश्वरी।
रक्ताङ्गी रक्तनयना रक्ताची रक्तलोचना॥ ९॥
रेवती रुक्मिणी राधा रौद्री रामा रजोगुणा।
रम्या च रमणीया च रामक्रीड़ावती तथा॥ १०॥
रामार्च्चिता रामपूज्या रङ्गिनी रामवल्लभा[1]।
रक्ताची रक्तहास्या च रुधिरा रुधिरप्रिया॥ ११॥
रक्तारक्तमयी राज्ञी रसयुक्ता रसप्रिया।
रसमाला रसमयी तथा रसवती रतिः॥ १२॥
रूपमाला रूपवती रूपाङ्गदविभूषणा।
रेणुका रेत[2] रूपा च रसरूपा रसाश्रया[3]॥ १३॥
भागीरथी तथोन्नासा[4] वशिनी वेशरूपिणी।
रेवा च शाम्भवी चैव मृदापारण[5] पण्डिता॥ १४॥
शतनाम इदं देवि कथितं भक्तितस्तव।
गुह्याद् गुह्यतरं गुह्यं कलिकालस्य सम्मतम्॥ १५॥
अष्टोत्तरशतं जप्त्वा दशधा वापि सुन्दरि।
पठित्वा फलमाप्नोति अयुतं वरवर्णिनि॥ १६॥
अयुतावर्त्तनाद्देवि चाश्वमेधफलं लभेत्।
गोमेधशतयज्ञानां फलमाप्नोति निश्चितम्॥ १७॥
प्रपठेद् यदि शुद्धात्मा स्वकीयस्त्रीषु संरतः।
वामभागे स्त्रियं स्थाप्य धूपामोद सुगन्धितः॥ १८॥
ताम्बूल-पूरितमुखो यदि स्याज्जपतत्परः।
यद्यप्यदीक्षिता नारी दूरतः परिवर्जयेत्॥ १९॥
दीक्षिता-परनारीषु यदि मैथुनमाचरेत्।
न विन्दोः पातनं कार्य्यं कृते च ब्रह्महा भवेत्॥ २०॥

१ रामशब्देनात्र परशुरामः, बलरामः, श्रीरामश्च यथायथं ज्ञेयम्।
२ सर्व्वसान्ता अप्यदन्ता इति नियमात् रेतः शब्दस्य रेतरूपता।
३ रसाश्रया" इत्यत्र "रसप्रिया" इति क्वचित् पुस्तके पाठः।
४ "उन्नासा" इत्यत्र "उल्लासा" इति क्वचित् पुस्तके पाठः।
५ "मृदापा" इत्यत्र "वसुधा" इति क्वचित् पुस्तके पाठः। मृदापारणां मृत्तिकाविदारणमित्यर्थः।

यदि न प्रपतेद्विन्दुः परनारीषु पार्व्वति।
सर्व्वसिद्धीश्वरो भूत्वा विहरेत् क्षितिमण्डले ॥ २१ ॥

इति श्रीकालिविलासतन्त्रे श्रीभुवनेश्वरी शतनामस्तोत्रं समाप्तम्।

ॐ तत्सदित्यादि।

---

न मद्यं प्रपिबेद्देवि कलिकाले कदाचन।
पीत्वा पीत्वेति वचनं सत्यत्रेतादि सम्मतम् ॥ २२ ॥
पीत्वा मद्यं कलौ देवि ब्रह्महत्या पदेपदे।
नामाक्षरात् समुद्धृत्य कथितो नाम निर्णयः ॥ २३ ॥
सत्यत्रेता परार्द्धे तु प्रजपेन्मद्यशोधनम्[1]।
न कलौ शोधनं मद्यं नास्ति नास्ति वरानने।
न कर्त्तव्यं कलौ मद्यपानञ्च नगनन्दिनि ॥ २४ ॥

इति श्रीकालीविलासतन्त्रे देवदेवीसंवादे दशमः पटलः समाप्तः।

---

1 "प्रजपेन्मद्यशोधनम्" इत्यत्र "प्रशस्तं मद्यशोधनं" इति पाठान्तरम्।

## अथ एकादशः पटलः ।

श्रीदेव्युवाच ।

महात्रिपुरसुन्दर्य्याः शतनामानि साम्प्रतम् ।
कथ्यन्तां मे, दया नाथ यद्यप्यस्ति तदा मयि ॥ १ ॥

श्रीतामस उवाच ।

शृणु चार्व्वङ्गि वक्ष्यामि सावधाना-वधारय ।
यन्नोक्तं सर्व्वतन्त्रेषु अधुना निगदामि ते ॥ २ ॥

अस्य श्रीत्रिपुरसुन्दरी-शतनाम-स्तोत्रस्य परं
ब्रह्मऋषिर्गायत्रीच्छन्दो महात्रिपुर-
सुन्दरी देवता धर्म्मार्थ-काम-
मोक्षेषु विनियोगः ।

( ॐ ) महामाया महादेवी मेनका मेघगर्जिनी ।
मोहिनी हरिणाक्षी च हारिणी हरवल्लभा ॥ ३ ॥
हरिपूज्या हराराध्या हेरा हैमवती हरा ।
हेमरूपा च हेमा च हेमाभरणभूषिता ॥ ४ ॥
रङ्गिणीरङ्गरूपा च राधा वृन्दावनेश्वरी ।
वलावलवती बाला बालिका वेशधारिणी ॥ ५ ॥
वयस्था वेशधा चैव विद्या श्रीविष्णुपूजिता ।
वियद्गङ्गा व्योमगङ्गा विशाला विश्वमोहिनी ॥ ६ ॥
रङ्गिणी रङ्गणीया च रणभूमिक्षतालया ।
पूता पवित्रा परमा परा पुण्याविभूषणा ॥ ७ ॥
पुण्यनाम्नी पापहन्त्री पापारिः पापनाशिनी ।
पुण्यदा पुण्यकीर्त्तिश्च पुण्यश्लोका च पावनी ॥ ८ ॥
रूपमाला रूपवती रसावेशपरिच्छदा ।
रक्षणी रक्षणीया च रुक्ममाला विभूषणा ॥ ९ ॥
रसरूपा रसोल्लासा रसानघपरिच्छदा[1] ।
रम्भारामा च रम्या च रमणी रामपूजिता ॥ १० ॥

१ "रसानघपरिच्छदा" इत्यत्र रसालयपरिच्छदा" इति पाठः क्वचित् पुस्तके ।

सौभाग्या सुवशासाध्वी सत्यासत्यस्वरूपिणी ।
त्रिगुणात्रिगुणाराध्या त्रिवेदी त्रिगुणेश्वरी ॥ ११ ॥
त्रिमूर्त्तिस्त्रिदशाराध्या त्रयीत्रिदिवसुन्दरी ।
सुखदा सुमुखी सुभ्रु: सुवेशी वेशधारिणी ॥ १२ ॥
आनन्दा नन्दिनी नन्दा परमानन्दरूपिणी ।
ईश्वरी ईश्वराराध्या रक्तपद्मसमप्रभा ॥ १३ ॥
राकारम्या रक्तदेहा रमणी ब्रह्ममोहिनी ।
योगिनीनां स्वरूपा च ब्रह्माण्डजननी परा ॥ १४ ॥
नामाक्षरात् समुद्धृत्य दशनाम इतीरितम् ।
छन्दोऽस्य च प्रवक्ष्यामि शृणु पार्व्वति सारदे[२] ॥ १५ ॥

अस्य श्रीत्रिपुरसुन्दरी शतनामस्तोत्रस्य परं
ब्रह्मऋषि: श्रीमहात्रिपुरसुन्दरी देवता-
धर्म्मार्थ-काममोक्षेषु विनियोग: ।

दशधा मन्त्रमुच्चार्य्य ततश्छन्द: पठेत्सुधी: ।
तत: स्तोत्रं पठित्वा तु सर्व्वसिद्धीश्वर: कलौ ॥ १६ ॥
भवत्येव न सन्देह: त्रिसन्ध्यं कमलेक्षणे ।
लक्षावर्त्तनमात्रेण अष्टैश्वर्य्यमयो भवेत् ॥ १७ ॥
मद्यञ्च मैथुनं भद्रे परयोनौ परित्यजेत् ।
परयोनौ महेशानि रेत: पातञ्च वर्ज्जयेत् ॥ १८ ॥
रेत: पातान्मद्यपानात् सिद्धिहानि: पदे पदे ॥ १९ ॥

इति श्रीकालीविलास-तन्त्रे त्रिपुरसुन्दरी शतनाम स्तोत्रं समाप्तम् ।

ॐ तत्सदित्यादि ।

इति श्रीकालीविलास-तन्त्रे एकादशपटल: समाप्त: ।

---

२ "सारदे" इत्यत्र "मादर" इति क्वचित् पुस्तके पाठ: ।

## अथ द्वादशपटलः ।

श्रीदेव्युवाच ।

शृणु पार्व्वति वक्ष्यामि शतनाम शुभानि च ॥ १ ॥

अस्य श्रीशतनाम स्तोत्रस्य श्रीसदाशिव ऋषि-
र्गायत्रीच्छन्दः श्रीतारादेवता चतु-
र्वर्गसिद्धये विनियोगः ।

अद्वैतरूपिणी आद्या असिता अणिमा तथा ।
अम्बिका चापरा चैव अपर्णा अलिनीति च ॥ २ ॥
अलम्बुषा अघोरा च अक्रूरा घोररूपिणी ।
शोभा च सुखदा सत्या सदा सन्तोषकारिणी ॥ ३ ॥
सीमन्तिनी इड़ा चैव अलङ्ग पिङ्गला तथा ।
दलिताञ्जनसंकाशा तारिणी तरुणेक्षणा ॥ ४ ॥
तापसी तपनाराध्या तारा च तरलेक्षणा ।
तूरीया तीर्थरूपा च कारिणी रागरूपिणी ॥ ५ ॥
विष्णुशक्तिः सादाराध्या सर्व्वशक्तिः सदार्च्चिता ।
महेशशक्तिर्म्माहेशी नानामुणिगणार्चिता ॥ ६ ॥
रागिणी रेणुकारम्या रक्तपद्मदलेक्षणा ।
रामशक्ती रामपूज्या नित्या श्रीरामचर्च्चिता ॥ ७ ॥
रत्नरङ्गा रणाध्यक्षा रणधीरा रणाग्रणीः ।
कृष्णवर्णा कृष्णपूज्या कृष्णशक्तिः करालिनी ॥ ८ ॥
धनुर्द्धरा च धानुष्की धन्या धर्म्मप्रदायिनी ।
कलुषघ्ना पापहरा पापारिः पापनाशिनी ॥ ९ ॥
पापरूपा च निष्पापा अकलङ्का कलङ्किनी ।
कलङ्कनाशिनी काली कलिकल्मषनाशिनी ॥ १० ॥
गङ्गा च यमुना चैव तथा गोदावरीति च ।
नर्म्मदा सिन्धुरूपा च कावेरी पुस्करा तथा ॥ ११ ॥
सुन्दरी भैरवी भव्या मातङ्गी वगलामुखी ।
कैलासवासिनी नित्या कालरात्रिः करालिका ॥ १२ ॥

काशीप्रयागरूपा च कौमारी कौषिकी तथा ।
क्रोधरूपा च अक्रोधा खेला हेला हलाहला ॥ १३ ॥
शतनाम च ते भक्त्या तारायाः परिकीर्त्तितम् ।
अष्टोत्तरशतं जप्त्वा दशधावा वरानने ॥ १४ ॥
ततः स्तवं पठित्वा वै सर्वसिद्धीश्वरो भवेत् ।
त्रिसन्ध्यं यः पठेन्नित्यं कलिकालस्य सम्मतम् ॥ १५ ॥
अष्टसिद्धीश्वरो भूत्वा विहरेत् क्षितिमण्डले ।
पूजाकाले निशीथे वा पठित्वामुक्तिमाप्नुयात् ॥ १६ ॥

इति श्रीकालीविलास-तन्त्रे श्रीतारा-शतनाम-स्तोत्रं समाप्तम् ।

ॐ तत्सदित्यादि ।

इति श्रीकालीविलास-तन्त्रे द्वादशपटलः समाप्तः ।

---

# अथ त्रयोदशपटलः ।

श्रीवामदेव उवाच ।

शृणुत्वं शतनामानि भैरव्याः प्राणवल्लभे ।
यस्याः प्रसादमात्रेण महासम्पद्भवेत् कलौ ॥ १ ॥

अस्य श्रीभैरवी शतनाम स्तोत्रस्य श्रीईश्वरऋषि-
र्गायत्रीच्छन्दः श्रीभैरवी शक्तिर्भैरवी देवता
धर्म्मार्थकाममोक्षार्थे विनियोगः ।

( ॐ क्लीं ) भैरवी भगिनी भद्रा भवानी भव चर्चिता ।
भुवना भुवनेशानि नानाभरणभूषिता ॥ २ ॥
भवेशी-भार्गवाराध्या भुवनानन्दकारिणी ।
भगिनी भागिनी भव्या भावनीया भयापहा ॥ ३ ॥
भोगेश्वरी भोगरूपा भवदुःखवियोगिनी ।
भयङ्करी भयहरा भव दुःखभयापहा ॥ ४ ॥
गौराङ्गी दीर्घनयना चतुर्व्वाहुधराम्बिका ।
सुकेशी दीर्घकेशी च कटाक्षी विशिखोज्ज्वला ॥ ५ ॥
रङ्गीरङ्गमयीरङ्गा देहानन्दमयी तथा ।
रङ्गणीया शिवाराध्या रङ्गलीला शिवार्चिता ॥ ६ ॥
रामपूज्या रणाचार्य्या रकारवर्णरूपिणी ।
रक्तधूलिपरिच्छिन्ना राज्ञी रोगविनाशिनी ॥ ७ ॥
रौद्री रौद्रस्वरूपा च रुद्रमूर्त्तीरणाग्रणीः ।
अरुणादित्यवर्णाभा रक्तपद्मदलेक्षणा ॥ ८ ॥
रुक्माङ्गदपरिच्छिन्ना रुक्ममालाविभूषिता ।
ब्रह्मपूज्या विष्णुपूज्या रुद्रपूज्या तथेश्वरी ॥ ९ ॥
सदार्चिता सदाराध्या महेश-पूजिता मही ।
मालामय्युन्मयी माला मानार्हा मानदायिनी ॥ १० ॥
वेदाग्री वेदसारा च वालार्कसदृशीति च ।
विधाता विफला वेद-रूपिणी विष्णुरूपिणी ॥ ११ ॥
वेदान्तरूपिणी विद्या तथा वैकुण्ठरूपिणी ।
ब्रह्मण्डरूपिणी रक्षा रूपिणी ब्रह्मरूपिणी ॥ १२ ॥

वसुदा सुमहावाला वेदरूपा विनोदिनी ।
कालिका च धराधात्री रौद्री च विश्वरूपिणी ॥ १३ ॥
विरूपाक्षी विशालाक्षी विशाला विषमा विधुः ।
विद्यावती रसवती वलावलवती वधूः ॥ १४ ॥
वैश्वानरीविशाखा च वेशदेशस्वरूपिणी ।
रञ्जनी रङ्गिणी रम्या रामा रासस्वरूपिणी ॥ १५ ॥
रामा श्रीसारसोन्मत्ता रसरूपा रसप्रदा ।
राधिका रामरूपा च राध्या रामार्त्ति नाशिनी ॥ १६ ॥
शतनाम स्तोत्रमिदं यः पठेत् शिवमन्दिरे ।
पठित्वा पाठयित्वा वा सर्वसौभाग्य मालभेत् ॥ १७ ॥
त्रिसन्ध्यं यः पठेन्नित्यं भक्त्या द्विवत्सरावधि ।
सर्वसिद्धीश्वरो भूत्वा गाणपत्यं लभेतसः ॥ १८ ॥

इति श्रीकालीविलास-तन्त्रे श्रीभैरवी-शतनाम स्तोत्रं समाप्तम् ।

ॐ तत्सदित्यादि ।

इति श्रीकालीविलास-तन्त्रे त्रयोदशपटलः समाप्तः ।

---

# अथ चतुर्द्दशपटलः ।

श्रीदेव उवाच ।

अतःपरं प्रवक्ष्यामि सामान्यं कलिपूजनम् ।
यत्कृत्वा साधको याति दुर्लभं ब्रह्ममन्दिरम् ॥ १ ॥

श्रीदेव्युवाच ।

पृच्छाम्येकं महाभाग योगीन्द्रवृषभध्वज ।
कलौ लोका महाभाग लालसावृत्तिसंवृताः ॥ २ ॥

श्रीअघोर उवाच ।

सामान्यं शृणु हे देवि पूजनं कलिदुर्लभम् ।
मूलाधारे स्मरेद्दिव्यं त्रिकोणं तेजसां निधिम् ॥ ३ ॥
नीचां स्थावरवत्तन्वीं पीतां भास्वदनुत्तमाम् ।
त्रिकोणान्तर्गतां नित्यां वलया काररूपिणीम् ॥ ४ ॥
स ब्रह्मा स शिवः साक्षात् स शूरः परमोत्तमः ।
स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः ॥ ५ ॥
कुलकुण्डलिनीं ध्यात्वा सर्वपापैः प्रमुच्यते ।
महा महापातकेभ्यः पूतो भवति तत्क्षणात् ॥ ६ ॥
अष्टोत्तरशतं जप्त्वा दशधा वा जपेद् यदि ।
पूर्णपूजाफलं प्राप्य परं ब्रह्माधिगच्छति ॥ ७ ॥
गोशृङ्गे सर्षपं देवि यावत्तिष्ठति निश्चलम् ।
तावत्कालमनोनीत्वा मनुब्रह्मजपेद् यदि ॥ ८ ॥
स एव पूजकश्रेष्ठोह्यश्वमेधफलं लभेत् ।
कटाक्षमात्रतो देवि स्वर्गमोक्षमवाप्नुयात् ॥ ९ ॥
इति ते कथिता पूजा कलौ श्रीनगनन्दिनि ।
परे च विष्णुमन्त्रे च दशविद्यासु संयुता ॥ १० ॥
जपकाले मनोः स्थानं कथं वास्या वरानने ।
कोटिविद्युल्लताकार विन्दुमध्ये च भावना ॥ ११ ॥

विहाय सप्तभगिनीः सक्षमः प्रजपेद् यदि ।
तदैव जायते सिद्धिर्गुरौ भक्तिर्भवेद् यदि ॥ १२ ॥
कामिनी क्रोधिनी चैव शोभिनी मोहिनी तथा ।
शाकिनी मदिनी चैव तथा मात्सर्य्यरूपिणी ॥ १३ ॥
क्षमया सह चार्व्वङ्गि पूजनं कुरुयत्नतः ।
इति ते कथितं सर्व्वं गृहिणां कलिसम्मतम् ॥ १४ ॥

इति श्रीकालीविलास-तन्त्रे चतुर्द्दशपटलः समाप्तः ।

---

## अथ पञ्चदशपटलः ।

श्रीतत्पुरुष उवाच ।

अतःपरं प्रवक्ष्यामि मोहनं कलिसम्मतम् ।
तथा वशीकरं मन्त्रं कलिकालेष्टदं शुभम् ॥ १ ॥
गुह्याद् गुह्यतरं गुह्यं प्रकृताख्यान-सम्मतम् ।
संस्कृताख्यान संयुक्तं यद्वशीकरणं शृणु ॥ २ ॥
"ॐ नमः फट् विकट घोररूपिणि देवदत्ते स्वाहा" ।
सप्ताभिमन्त्रितं कृत्वा यन्नाम्ना भक्षयेन्नरः ॥ ३ ॥
ग्रासं कृत्वा भक्तमन्त्रं शीघ्रं सिद्धिप्रदायकम् ।
स वश्यो जायते देवि शतदिनावधि ध्रुवम् ॥ ४ ॥
"ॐ वश्यत्वं वा राजत्वं वा स्वाहा" इति मन्त्रेण
सप्तधा मुखप्रोक्षणम् ।
प्रातःकाले च कृत्वा वै प्रत्यहं कमलानने ।
वश्याभवन्ति लोकाश्च यावज्जीवञ्च भूतले ॥ ५ ॥
"ॐ राजमुखि वश्यमुखि स्वाहा" इति मन्त्रेण
शृणु हे तैलमोक्षणम् ।
संस्थाप्य सार्षपं तैलं वामहस्ते वरानने ।
अनामया त्रिधामन्त्र्य पुनर्मूलं त्रिधापठेत् ॥ ६ ॥
लेपयेन्मुखकेशादौ शय्यायां नगनन्दिनि ।
तन्मन्त्रं शृणु चार्व्वङ्गि ब्रह्माण्डमोहनं परम् ॥ ७ ॥
ॐकारं पूर्व्वमुच्चार्य्य क्लीँकारं तदनन्तरम् ।
श्रीँकारञ्च ततो देवि इति मोहनमीरितम् ॥ ८ ॥

श्रीदेव्युवाच ।

स्वाहा प्रणवसंयुक्तं शूद्रोमन्त्रं कथं जपेत् ॥ ९ ॥

श्रीदेव उवाच ।

तन्त्रोक्तं प्रणवं स्वाहा प्रशस्तं शूद्रजातिषु ।
अथवा प्रणवस्थाने दीर्घप्रणवमीरितम् ॥ १० ॥

वह्निजायास्थले माया प्रशस्ता न च दूषिता।
इति ते कथितं भद्रे मोहनञ्च वशीकरम्॥ ११॥
शीघ्रसिद्धिप्रदां विद्यां अपभाषां शृणु प्रिये[1]॥ १२॥
"मुखेर् रसे अमृत चक्षुर रसे, काममोर् मोहने
जगत्संसार् मोह, मुद्दवट राजा श्रीराम
हय, सिद्धिगुरुर् पा, श्रीरामेर आज्ञा।
चक्षुर् पिचलि, मुखेर् आप्, येना-
करि मा वाप्"।
अपभाषान्तरं वक्ष्ये सावधानावधारय॥ १३॥
"त्रिपथ्या त्रिपथेर्धूलि, ईश्वरीर नाम मात्रधूलि,
शिरे दिया वाज घरे याय परे पाय। दुष्-
वनेर् कटे तापाये दारधूलि शिरे चरे,
अमुक आसिया पायपरे श्रीरामेर
आज्ञा।"

इति श्रीकालीविलासतन्त्रे पञ्चदशपटलः समाप्तः।

---

१ इतः परं एतत् पटलशेषपर्य्यन्तं क्वचित् पुस्तके नास्ति।

# अथ षोड़शपटलः ।

श्रीदेव्युवाच ।

वगला शतनामानि कथ्यन्तां मे कृपानिधे ।
यन्नोक्तं अन्यतन्त्वेषु, अधुना कथय प्रभो ॥ १ ॥

श्रीईश्वर उवाच ।

अस्याः श्रीवगला देव्याः शतनाम स्तोत्रस्य
श्रीसदाशिवऋषिर्गायत्रीछन्दः श्रीवगला-
मुखी देवता धर्म्मार्थकाममोक्षार्थ-
सिद्धये विनियोगः ।

( ॐ ) वशिनी वशपूज्या च वलिका वसुदा वसुः ।
वाग्वादिनीवयोरूपा बलाबलवती तथा ॥ २ ॥
विषमा विकटा वेधा विशाला विमना विधिः ।
विद्या च वेदरूपा च बन्ध्या च वेशधारिणी ॥ ३ ॥
वेणी च विकटा वेश्या नानावेश परिच्छदा ।
वयो रूपा च वृद्धा विकला वसुमतीति च ॥ ४ ॥
वगला वामनी देवी विष्णुपूज्या विनोदिनी ।
वैष्णवी शिष्ण माता च वाराही ब्राह्मणी वरा ॥ ५ ॥
वलावलवती वाला विधेश्च परिपूजिता ।
विशिष्टा ब्रह्मपूज्या च नानावेश विनोदिनी ॥ ६ ॥
वैकुण्ठरूपिणी ब्राह्मी विधिपूज्या विधुन्तुदा ।
वल्लभा वलरूपा च अशेष वलधारिणी ॥ ७ ॥
वेदज्ञा वेदमाता च विशाल नयनोज्ज्वला ।
वेदमाता विमाता च वेदगर्भा विमोचणी ॥ ८ ॥
विरूपाक्षी वला वाली कृष्णविमलरूपिणी ।
वाराही च वलाका च वलिनी वर्णरूपिणी ॥ ९ ॥
गन्धिनी गन्धरूपा च गयागङ्गाप्रभा तथा ।
गोवर्द्धनी च गोविन्द-पूजिता च गदाधरी ॥ १० ॥

गहना गुह्यरूपा च गोरूपा गोकुलेश्वरी।
गोलोकवासिनी चैव नित्या गोलोकरूपिणी॥ ११॥
गरिमा च गरिष्ठा नित्या गोवर्द्धनरूपिणी।
गङ्गाधरी च गोविन्दा गोविन्द-पूजिता गदा॥ १२॥
गहना गुह्यरूपा च तथैव गन्धरूपिणी।
गणार्हा गानदागानरूपिणी गण मोहिनी॥ १३॥
नीलमाला मनोन्मत्ता ललजिह्वा ललाटिनी।
आनन्दरूपिणी आद्या आचार्य्य—स्वांशुरूपिणी॥ १४॥
मूर्त्तिश्च मुख्यरूपा च महामोक्षप्रदायिनी।
खेलत् खञ्जनगामी च खेला खलखला तथा॥ १५॥
ईश्वरी ईश्वराराध्या अकारा ॐ स्वरूपिणी।
वर्णा च वगलामुख्याः शतनाम इतीरितम्॥ १६॥
अष्टोत्तरशतं नाम यः पठेन्नित्यमुत्तमम्।
सर्व्वसिद्धीश्वरो भूत्वा देवीपुत्रो भवेत्तुसः॥ १७॥
त्रिसन्ध्यं यः पठेन्नित्यं तस्य सिद्धिः प्रजायते।
नान्यथा फलभागीस्यात् कल्पकोटिशतैरपि॥ १८॥

इति श्रीकालीविलासतन्त्रे श्रीवगलामुख्याः शतनामस्तोत्रं समाप्तं।

ॐ तत्सदित्यादि।

इति श्रीकालीविलास-तन्त्रे षोड़शपटलः समाप्तः।

## अथ सप्तदशपटलः ।

श्रीतामस उवाच ।

मातङ्गी शतनामानी-दानीं कलिमते शृणु ।
यस्य प्रसादा दीशोहं पार्व्वति प्राणवल्लभे ॥ १ ॥

अस्य श्रीमातङ्गी शतनामस्तोत्रस्य श्रीकृष्ण ऋषि
गायत्रीच्छन्दः श्रीमातङ्गी देवता चतुर्व्वर्ग
सिद्धये विनियोगः ।

(ॐ) माधवी मथुरा मत्ता माननीया मदोद्धता ।
मान्या च मानदात्री च मनीषा मानमोहिनी ॥ २ ॥
मथुरा माधवी मध्या मानसी मनमोहिनी ।
माधुरा मानयोग्या च मत्तमातङ्गगामिनी ॥ ३ ॥
मेनका मानवी मेधा मदना मदनोत्तरा ।
मत्ता प्रमत्ता मदना मोदना मदनोद्धता ॥ ४ ॥
माननी मानयोग्या च मेखला मरमोहिनी ।
मनोरूपा उन्मनी च मायामेधामदोद्धता ॥ ५ ॥
निमिषा निर्निमेषा च मानगी मथुरा तथा ।
मदमत्ता महामत्ता मानदा मधुसूदनी ॥ ६ ॥
मतिर्माता महालक्ष्मीर्निल्या मदनपीड़िता ।
मेघविद्युत्प्रभाकाशा मेघानन्दप्रवर्द्धिनी ॥ ७ ॥
मदना मदरूपा च मुनिगुह्या मुनिस्तुता ।
अर्थरूपा महामेधा माया मत्ता स्वरूपिणी ॥ ८ ॥
मुकुन्दपूजिता मौनी मौनव्रतपरायणा ।
मेधा मेधावती मध्या मदना मदनातुरा ॥ ९ ॥
मानुषी च मनोरूपा महामोहस्वरूपिणी ।
तरणी तरुणी तारा तारिणी तरलेक्षणा ॥ १० ॥
तुरीया च तथा तुथ्या तुल्या च तामसी तिथिः ।
तीर्थातीर्थमयी तीर्थरूपिणी तामसान्तरा ॥ ११ ॥
तपस्या तापसी तापा तपना तुलना इति ।
गोलोकवासिनी गम्या गुणज्ञा गुणरूपिणी ॥ १२ ॥

गौरी च गोपिनी गौरा गानागानस्वरूपिणी ।
गिरीशा गिरिशा गन्धा गगणा गगणेश्वरी ॥ १३ ॥
ईकाररूपिणी नित्या ईश्वरी ईश्वरप्रिया ।
सङ्क्षेप इति ते देवि शतनाम इतीरितम् ॥ १४
त्रिसन्ध्यं यः पठेन्नित्यं तस्य सिद्धि र्न संशयः ॥ १५ ॥

इति श्रीकालीविलास-तन्त्रे श्रीमातङ्गी शतनाम-स्तोत्रं समाप्तम् ।

ॐ तत्सदित्यादि ।

इति श्रीकालीविलास-तन्त्रे सप्तदशपटलः समाप्तः ।

## अथाष्टादशपटलः ।

श्रीदेव्युवाच ।

देव देव महादेव संसारार्णवतारक ।
पृच्छाम्येकं महाभाग कृपया कथयप्रभो ॥ १ ॥
ध्यानञ्च कार्त्तिकेयस्य तथा मन्त्रं जगत्पते ।
ध्यानञ्च विजया देव्या जया देव्या वदप्रभो ॥ २ ॥
मयूरवाहनं तस्य, गणेशस्य च मूषिकम् ।
शरत्कालीन महिन्या: पूजनञ्च कथं प्रभो ॥ ३ ॥
कालिकाया: पुराणेषु तथा देवीमते प्रभो ।
पूजनं कार्त्तिका दीनां न च कुत्रापि संश्रुतम् ॥ ४ ॥

श्रीसद्योजात उवाच ।

साधुपृष्टं सुराराध्ये धन्यासि सुरवन्दिते ।
शृणु हे शारदीं पूजां कालिविलाससम्मताम् ॥ ५ ॥
शृणु ध्यानं प्रथमतः कार्त्तिकेयस्य सङ्गतम् ।
सुतप्त कनकप्रख्यं खड्गपत्तिधरं परम् ॥ ६ ॥
सोष्णीश मस्तकं देवं मयूरवरवाहनम् ।
ब्रह्माण्डाभ्यन्तरे वीरं विष्णु ब्रह्मशिवात्मकम्[1] ॥ ७ ॥
ध्यात्वापाद्यादिकं दत्त्वा दशधा प्रजपेन्मनुम् ।
शृणुमन्त्रं प्रवच्यामि कार्त्तिकस्य यथोचितम् ॥ ८ ॥
( ॐ )"गुहाय कार्त्तिकाय सेनापतये स्वाहा" ।
चतुर्द्दशाक्षरी विद्या कार्त्तिकस्य ह्यीतिरिता ॥ ९ ॥
प्रतिमायां हृदिस्थाने दत्त्वाङ्गुष्ठं सुलोचने ।
दशधामन्त्रमुच्चार्य्य प्राणन्यासस्तदा भवेत् ॥ १० ॥
जया ध्यानं प्रवच्यामि चातिगुह्यं सुलोचने ।
तप्त काञ्चन सङ्काशां द्विभुजां लोललोचनाम् ॥ ११ ॥
कटाक्षविशिखो पेतां दिव्याम्बरपरिच्छदाम् ।
दिव्याभरणसंयुक्तां ध्यायेत्तां सिद्धिदायिनीम् ॥ १२ ॥

१ विष्णु ब्रह्म शिवात्मकं इत्यत्र ब्रह्म विष्णु शिवात्मकं इति पाठान्तरम् ।

ध्यात्वा पाद्यादिकं दत्त्वा संपूज्यप्रजपेन्मनुं ।
तन्मन्त्रं शृणु चार्व्वङ्गि-जपात् सिद्धीश्वरो यतः ॥ १३ ॥
"क्लीँ क्लीँ जयायै क्लीँ क्लीँ"
सप्ताक्षरी महाविद्या जयायाः परिकीर्त्तिता ।
मायाद्वयं जयाङेन्ता पुनर्मायाद्वयं प्रिये ॥ १४ ॥
अधुना संप्रवक्ष्यामि विजया तनुं[1]मुत्तमम् ।
दलिताञ्जनसंकाशां द्विभुजां खञ्जनेक्षणाम् ॥ १५ ॥
कटाक्षविशिखोद्दीप्तां अञ्जनान्वित लोचनाम् ।
दिव्याम्बरपरीधानां गानयन्त्र विभूषणाम्[2] ॥ १६ ॥
ध्यायेत्तां विजयां नित्यां सर्व्वसिद्धिप्रदायिनीम् ।
ध्यात्वा पाद्यादिकं दत्त्वा दशधा प्रजपेन्मनुम् ॥ १७ ॥
शृणु मन्त्रं प्रवक्ष्यामि महादेव्याः सुसिद्धिदम्[3] ।
"ऐँ क्लीँ विजये क्लीँ ऐँ"
सप्ताक्षरी महाविद्या विजयायाः प्रकीर्त्तिता ।
विजया हृदयेऽङ्गुष्ठं दत्त्वा मन्त्रं जपेद् यदि ॥ १८ ॥
प्राणसिद्धिस्तदा देवि जायते नात्रसंशयः ।
रहस्यं शृणु वक्ष्यामि मयूरस्य यथोचितम्[4] ॥ १९ ॥
नानाचित्र विचित्राङ्गं गरुड़ाज्जननं तव[5] ।
अनन्तशक्तिसंयुक्तं बाला—हिभक्षणं ततः ॥ २० ॥
गरुड़स्त्वं महाभाग सदात्वां प्रणमाम्यहम् ।
ध्यात्वा पाद्यादिकं दत्त्वा चैकधा मन्त्रमुच्चरेत् ॥ २१ ॥
तन्मन्त्रं शृणु वक्ष्यामि मयूरस्य यथोचितम् ।
क्लीँ मं मयूराय क्लीँ
माया मं मयूरायेति पुनर्माया सुलोचने ॥ २२ ॥

१ "विजया तनुमुत्तमं" "विजया मनुमुत्तमम्" इति पाठान्तरं तनुशब्दे न मनुशब्दे न वा अत्र ध्यानं लक्ष्यते ।

२ गानयन्त्र इत्यत्र पानयन्त्र इति पाठान्तरम् ।

३ "महादेव्याः" इत्यत्र "महामन्त्रं इति पाठान्तरम् ।

४ यथोचितं इत्यत्र यथोदितं इति पाठान्तरम् ।

५ तव इत्यत्र तत तव इति पाठान्तरम् ।

सप्ताक्षरं महामन्त्रं हृदये प्रजपेद् यदि ।
प्राणसिद्धिस्तदा देवि मयूरस्य भवेद् ध्रुवम् ॥ २३ ॥
अधुना संप्रवक्ष्यामि रहस्यं मूषिकस्य च ।
वृषाकार महाकाय वृषरूप महावल ॥ २४ ॥
धर्म्मरूप वृषस्त्वं हि गणेशस्य च वाहनम् ।
नमस्करोम्यहन्त्वाखो पूजासिद्धिं प्रयच्छमे ॥ २५ ॥
वृषाच्च जायते ह्याखुर्दुर्गातन्त्रेषु सम्मतः ।
अधुना संप्रवक्ष्यामि तन्मन्त्रञ्च यथोचितम्[1] ॥ २६ ॥

क्रीँ मूं मूषिकाय क्रीँ

माया मूं मूषिकायेति पुनर्मायेति संजपेत् ।
इति सप्ताक्षरी विद्या मूषिकस्य सुसम्मता ॥ २७ ॥
ध्यात्वा पाद्यादिकं दत्त्वा क्षिपेत् पुष्पाञ्जलित्रयम् ।
मूषिकहृदयेऽङ्गुष्ठं दत्त्वा मन्त्रं समुच्चरेत् ॥ २८ ॥
प्राणन्यासस्तदा देवि मूषिकस्य च सम्मतः ।
अधुना संप्रवक्ष्यामि सिंहस्य च यथोचितम् ॥ २९ ॥
सिंहस्त्वं हरिरूपोऽसि स्वयं विष्णुर्न संशयः ।
पार्व्वत्या वाहनं त्वं हि अतस्त्वां पूजयाम्यहम् ॥ ३० ॥
शृणु मन्त्रं प्रवक्ष्यामि सिंहस्य तन्त्रसम्मतम् ।
मायाद्वयं ततः सिंहायेति महावलाय च ॥ ३१ ॥
पुनर्माया द्वयं देवि सिंहमन्त्रः प्रकीर्त्तितः ।

"क्रीँ क्रीँ सिंहाय महावलाय क्रीँ क्रीँ"

एषा विद्या महादेवि सिंहस्य द्वादशाक्षरी ॥ ३२ ॥
अङ्गुष्ठं हृदये दत्त्वा सिंहस्य नगनन्दिनि ।
एकधा मन्त्रमुच्चार्य्यप्राणसिद्धिश्च जायते ॥ ३३ ॥
ध्यात्वा पाद्यादिकं दत्त्वा ह्येकधा मन्त्रमुच्चरेत् ।
इति ते कथितं देवि सिंह पूजा विधानकम् ॥ ३४ ॥

इति श्रीकालीविलास-तन्त्रे अष्टादशः पटलः समाप्तः ।

---

१ "यथोचित" मित्यत्र यथोदितमिति पाठान्तरं ।

# अथोनविंशपटलः ।

अधुना संप्रवक्ष्यामि महिषस्य च पूजनम् ।
महिषस्त्वं महावीर शिवरूपः सदाशिवः ॥ १ ॥
अतस्त्वां पूजयिष्यामि क्षमस्वमहिषासुर ।
ध्यात्वा पाद्यादिकं दत्त्वा ह्यवधा प्रजपेन्मनुम् ॥ २ ॥
तन्मन्त्रं शृणु देवेशि स्मरणान्मुक्तिदायकम् ।
क्रौं क्रौं हं महिषायेति हं क्रौं क्रौं च ततःपरम् ॥ ३ ॥

"क्रौं क्रौं हं महिषाय हं क्रौं क्रौं"

एषादशाक्षरी विद्या भक्त्या ते परिकीर्त्तिता ।
महिषहृदयेऽङ्गुष्ठं दत्त्वामन्त्रं जपेत् सकृत् ॥ ४ ॥
प्राणन्यासो महिषस्य सहसा जायते ध्रुवम् ।
जया वामे स्थिता नित्यं विजया दक्षिणे तथा ॥ ५ ॥
वामे च कार्त्तिको देवो दक्षे गणपतिस्तथा ।
ततो लम्बोदरं स्थूलं गजवक्त्रं सुमोचनम् ॥ ६ ॥
सर्व्वदेवमयं देवं पार्व्वती—नन्दनं भजे ।
ध्यात्वा पाद्यादिकं दत्त्वा ह्येकधा मन्त्रमुच्चरेत् ॥ ७ ॥
तन्मन्त्रं शृणु वक्ष्यामि स्मरणान्मोक्षमाप्नुयात्[१] ।

क्रौं गं गणपतये गं क्रौं

मायां वर्णतृतीयञ्च नादविन्दुसमन्वितम् ॥ ८ ॥
तथा गणपतिं ङेऽन्तं विलोमेन पुनर्द्वयम् ।
एषा नवाक्षरी विद्या गणनाथेषु सम्मता । ९ ॥
गणेश हृदयेऽङ्गुष्ठं दत्त्वा मन्त्रं जपेद् यदि ।
प्राण न्यासो भवेद्देवि गणेशस्य च नान्यथा ॥ १० ॥

इति श्रीकालीविलासतन्त्रे ऊनविंशतिपटलः समाप्तः ।

---

१ माप्नुयात् इत्यत्र दायकं इति पाठान्तरम् ।

## अथ विंशतिपटलः ।

श्रीदेव्युवाच ।

लक्ष्मी सरस्वती पूजा कृपया कथ्यतां मयि ।

श्रीवामदेव उवाच ।

या विद्या[1] प्रकृतिर्लक्ष्मीर्दुर्गायाया दक्षिणे स्थिता ॥ १ ॥
तां तप्तकाञ्चनाभासां द्विभुजां लोललोचनाम् ।
कटाक्षविशिखोद्दीप्तां अञ्जनाञ्चित लोचनाम् ॥ २ ॥
शुक्लाम्बरपरीधानां सिन्दूर तिलकोज्ज्वलाम् ।
शुक्लपद्मासनगतां—ध्यायेन्नारायण प्रियाम् ॥ ३ ॥
ध्यात्वापाद्यादिकं दत्त्वा दशधा प्रजपेन्मनुम् ।
तन्मन्त्रं शृणुवक्ष्यामि सर्व्वसिद्धिप्रदायकम् ॥ ४ ॥

"क्लीँ श्रीँ कमलवासिन्यै श्रीँ क्लीँ ।"

क्लीँ श्रीँ कमलवासिन्यै गणेशजननि ! ततः ।
पुनः कामं तथामायां लक्ष्मीदेव्या दशाक्षरी ॥ ५ ॥
इयं दशाक्षरी विद्या ह्येकधा जपमात्रतः ।
प्राण न्यासोभवेत्तस्या अङ्गुष्ठेन च सुन्दरि ॥ ६ ॥
अधुना संप्रवक्ष्यामि सारदा—पूजनं शृणु ।
शङ्खेन्दु कुन्दसं काशां द्विभुजाब्जदलेक्षणाम्[2] ॥ ७ ॥
कटाक्षेण च सोद्दीप्तां[3] अञ्जनाञ्चितलोचनाम् ।
सिन्दूर तिलकोद्दीप्तां दिव्याम्बरपरिच्छदाम् ॥ ८ ॥
दिव्याभरण शोभाढ्यां वाक्यरूपां सरस्वतीम्[4] ।

क्लीँ ऐँ सरस्वत्यै क्लीँ ऐँ

एषा चाष्टाक्षरी विद्या जपात् सिद्धिप्रदायिका ॥ ९ ॥

---

१ विद्या इत्यत्र नित्या इति पाठान्तरम् ।

२ द्विभुजाब्जदलेक्षणां इत्यत्र द्विभुजां पद्मदलेक्षणां इति छन्दोहीनः पाठः क्वचित् पुस्तके । द्विभुजा चासौ अब्जदलेक्षणा चेति कर्म्मधारयः, तादृशीमित्यर्थः ।

३ कटाक्षेण च सोद्दीप्तां इत्यत्र कटाक्षविशिखोद्दीप्तां इति पाठान्तरम् ।

४ वाक्यरूपां सरस्वतीं इत्यत्र वाग्रूपाञ्च सरस्वतीं इति पाठान्तरम् ।

अङ्गुष्ठं हृदये दत्त्वा ह्येकधा प्रजपेद् यदि ।
प्राणन्यासस्तदा देवि जायते नात्रसंशयः ॥ १० ॥
शिवतन्त्रमतं देवि भक्तितः पूजयेत् शिवम् ।
शृणु ध्यानं प्रवक्ष्यामि ब्रह्मणः पूजनं तथा ॥११ ॥
अरुणादित्यसंकाशं चतुर्व्वक्त्रं चतुर्भुजम् ।
चतुर्वेदमयं देवं धर्म्मकामार्थमोक्षदम् ॥ १२ ॥
ध्यात्वा पाद्यादिकं दत्त्वा दशधा प्रजपेन्मनुम् ॥ १३ ॥
क्रौँ कं ब्रह्मणेकं क्रौँ
क्रौँ कं आदौ ब्रह्मणेकं ततः क्रौँ पुनरुच्चरेत् ।
इमं सप्ताक्षरं देवि दशधा प्रजपेद् मनुम् ॥ १४ ॥
विधायपूर्व्ववद्देवि ब्रह्मपूजां समापयेत् ।
इति ते ब्रह्मणः पूजा कथिता भुविदुर्लभा ॥ १५ ॥
सावित्री पूजनं भद्रे शृणुत्वं कथयामिते ।
क्रौँ सां सावित्रैसां क्रौँ
सप्ताक्षरमिदं मन्त्रं शृणु ध्यानं वदामिते[1] ॥ १६ ॥
प्रतप्त काञ्चनाभासां द्विभुजां लोललोचनाम् ।
दिव्याभरण शोभाढ्यां[2] दिव्याम्बरपरिच्छदाम् ॥ १७ ॥
सिन्दूरतिलकोद्दीप्तां अञ्जनाञ्चितलोचनाम् ।
ध्यात्वापाद्यादिकं दत्त्वा तां देवीं परिपूजयेत् ॥ १८ ॥
गणेश कार्त्तिकस्यापि मयूरमूषिकस्य च ।
जयाया विजया देव्याः सरस्वत्यास्तथैव च ॥ १९ ॥
कमलायास्तथा पूजा शिवस्य ब्रह्मणस्तथा ।
सावित्री पूजनं कृत्वा स च सिद्धीश्वरो भवेत् ॥ २० ॥
नवसिद्धम्बिका पूजां कृत्वा पूजाफलं लभेत् ।
तदा दशभुजा-पूजा समस्त फलदायिका ॥ २१ ॥
अन्यथा विफला पूजा कदाचिन्नफलप्रदा ।
आदौ दशभुजा-पूजा घटस्थापनपूर्व्वकम् ॥ २२ ॥

१ "सप्ताक्षरमिदं मन्त्रं शृणु ध्यानं वदामिते" इत्यत्र "ततः सप्ताक्षरमिदं शृणु देविवदाम्यहं" इति पाठान्तरम् ।

२ "शोभाढ्यां" इत्यत्र "भूषाढ्यां" इति पाठान्तरम् ।

पञ्चदेवं प्रपूज्यादौ पश्चान्महिषमर्द्दिनीं ।
ततस्तु कार्त्तिकादीनां पूजाञ्च यत्नतश्चरेत् ॥ २३ ॥
ततस्तु पत्रिका पूजा देवीपुराण सम्मता ।
सारात्सारं महेशानि चतुर्व्वर्गेषु सम्मतम् ॥ २४ ॥
इन्द्रवीजं समुद्धृत्य वामकर्णसमन्वितम् ।

क्लीँ दुर्गे दुर्गे रक्षणि स्वाहा

( क्लीँ ) दुर्गे दुर्गे रक्षणीति वह्निजायावधिर्म्मनुः । १५ ।
एषा दशाक्षरी विद्या कथिता भक्तितस्तव ॥
विद्या विद्या सुचासीना सुन्दर्य्यर्द्धेन्दुसंयुता । २६ ।
विद्या पुनः समासीना सुन्दरी महिषाग्रणीः ॥
हरिता-सुरसंवेशा[1] स्मृता शङ्करसंयुता । २७ ।
वह्निजायान्तविद्यांवै शृणु देवि षड़क्षरीम्[2] ।
माया वीजं सङ्कृत्य दुर्गां ङेन्तां समुद्धरेत् २८ ।

( क्लीँ दुर्गायै स्वाहा )

मन्त्रवीजसमुद्धारे वह्निजायावधिर्म्मनुः ॥
गन्धिनी च सुरासीना कामपूर्व्वानमागुणा । २९ ॥
स्वाहान्ताष्टाक्षरी विद्या कथिता शृणुसादरात् ।
विद्यावत्याशु आसिना सुन्दरी महिषासना ॥ ३० ॥
अर्द्ध विन्दुसमायुक्ता दुर्गा सम्बोधनद्वयम् ।
रक्षमि च ततश्चोक्ता कामवीजं ततःपरम् ॥ ३१ ॥
आद्यवीजान्तरं ह्येषा कथिता च दशाक्षरी ।
मायया पूटितं दुर्गा सम्बोधनपदं प्रिये ॥
चतुर्वर्णा महाविद्या कथिता शूद्रजातिषु ।
इति ते कथिता पूजा कालीपुराणसम्मता ॥ ३३ ॥

१ हरितः सिंहः, असुरोमहिषासुरः तत्र संवेशः स्थितिर्यस्याः सा, सिंहे महिषासुरे च संस्थिता । इत्यर्थः ।

२ "शृणुदेवि षड़क्षरीं" इत्यत्र शृणु पञ्चारीं" शुभां" इति पाठान्तरं तत्र पञ्च शब्दस्य पञ्चशब्दात्‌ षट्परता ज्ञेया ।

तीक्ष्णवाणं तथा शक्तिं हस्तसंज्ञे च दक्षिणे ।
सारात्सारतरा पूजा सर्व्वपूजाफलप्रदा । ३४ ।
ब्रह्मपूज्या विष्णुपूज्या शिवपूज्या च सर्व्वदा ॥
यदि नोपूजयेद्देवीं शारदीं सिंहवाहिनीम् । ३५ ।
संवत्सरकृता पूजा सर्व्वासा विफला भवेत् ॥
इति ते कथिता पूजा शारदी मोक्षमाप्नुयात् । ३६ ।

इति श्रीकालीविलास-तन्त्रे विंशतिपटलः समाप्तः ।

---

## अथ एकविंशतिपटलः ।

श्रीदेव्युवाच ।

श्रुतं महिषमर्द्दिन्याः पूजनं कलिसम्मतम् ।
कालिकादिपुराणोक्तं सर्व्वसिद्धिप्रदं शुभम् ॥ १ ॥
श्रुतञ्च सर्व्वं योगीन्द्र ध्यानं मन्त्रं दशाक्षरम् ।
दशभुजमयीं दुर्गां दलिताञ्जन सन्निभाम् ॥ २ ॥
कालिकां परमां दिव्यां श्रीकृष्णक्रोड़संस्थिताम् ।
कथयस्वदया नाथ योगध्यानप्रदप्रभो ॥ ३ ॥

श्रीअघोर उवाच ।

प्रतप्तकाञ्चनप्रख्यमर्द्दिन्या मन्त्रनिर्णयम् ।
कथयामिवरारोहे शृणु प्राणप्रिये मम ॥ ४ ॥
त्रिशूलञ्च तथा खड्गं चक्रञ्च वरवर्णिनि ।
सर्व्वोपरि त्रिशूलञ्च तदधः खड्गमुत्तमम् ॥ ५ ॥
चक्रञ्च तदधो भद्रे बाणञ्च तदधः क्रमात् ।
तदधश्चञ्चलापाङ्गि सर्व्वशक्तिसमन्वितम् ॥ ६ ॥
शक्तिरूपं महास्त्रञ्च दर्शनात् पापनाशनम् ।
हस्तयूथेषु वामेषु शृणु चास्त्रस्य निर्णयम् ॥ ७ ॥
खेटकमूर्द्ध हस्ते च चापञ्च तदधः क्रमात्[1] ।
अङ्कुशं पाशसंयुक्तं तदधो वरवर्णिनि ॥ ८ ॥
तदधश्च तथाघण्टां तदधः परशुं शृणु ।
प्रतप्तकनकप्रख्यमर्द्दिन्यास्तत्वनिर्णयम् ॥ ९ ॥
दलिताञ्जनसङ्काशां मर्द्दिन्याः शृणु निर्णयम् ।
ऊर्द्ध हस्तेस्थितां शक्तिं तदधो[2] बाण निर्णयम् ॥ १० ॥
तदधः संस्थितं चक्रं खड्गञ्च तदधः क्रमात् ।
सर्व्वोपरिस्थितं नित्यं त्रिशूलं परमाद्भुतम् ॥ ११ ॥
अधुना शृणु देवेशि सावधानावधारय ।

१ "क्रमात्" इत्यत्र "स्मृतं" इति पाठान्तरम् ।
२ "तदधो" इत्यत्र "ततश्च" इति पाठान्तरम् ।

शब्दस्य पातितो घण्टा गन्धाद्यैः परिपूजिता ॥ १२ ॥
तदधः संस्थितं नित्यं अङ्कुशं उन्मनीमयम्।
तदधः संस्थितं पाशं सिद्धिसूत्र परिच्छदम् ॥ १३ ॥
चापञ्च तदधो देवि तदधः खेटकं परम्।
इति ते कथितं सर्व्वं जम्बुभारतसम्मतम् ॥ १४ ॥
विपरीतं यतश्चाग्रं अन्यवर्षस्य सम्मतम्।
कामवीजं त्रिशूलञ्च खड्गं मायां तथैव च ॥ १५ ॥
चक्रं कूर्च्चं महेशानि वाणं वाग्भवमीरितम्।
शक्त्यस्त्रञ्च श्रियावीजं वामहस्तेवदामिते ॥ १६ ॥
खेटकं मान्मथं वीजं चापमङ्कुशमीरितम्।
अङ्कुशञ्च तथापाशं कन्दर्पराजमीरितम् ॥ १७ ॥
याघण्टा चञ्चला लाङ्गि सिद्धिसूत्रस्वरूपिणी।
नित्याश्रीकमलावीजरूपिणी सिद्धिदायिनी[1] ॥ १८ ॥
परशुञ्च तथा देवि माकरध्वजमीरितम्।
विपरीतमतं देवि भक्त्यार्त्ते परिकीर्त्तितम् ॥ १९ ॥
अथान्यत्संप्रवक्ष्यामिगिरिशे नगनन्दिनि।
वामवाहोरूर्द्ध देशे[2] त्रिशूलं त्रिगुणात्मकम् ॥ २० ॥
तदधश्च तथा खड्गं चक्रञ्च तदधः क्रमात्।
तदधस्तीक्ष्णवाणञ्च शक्तिञ्च तदधः क्रमात् ॥ ११ ॥
दक्षवाहोरूर्द्ध भागे खेटकं दीप्यते प्रिये।
तदधः पूर्णं चापञ्च तदधः पाशमङ्कुशम् ॥ २२ ॥
तदधश्च तथा घण्टां परशुं परमाद्भुतम्।
विपरीतमिदं प्रोक्तं भक्त्यार्त्ते नगनन्दिनी ॥ २३ ॥
अतःपरं प्रवक्ष्यालि विपरीतं यथोचितम्।
यस्य[3] विज्ञानमात्रेण शिवतुल्यो भवेन्नरः ॥ २४ ॥
वामवाहोरूर्द्ध भागे शक्तिं परमशोभनाम्।
तदधस्तीक्ष्णवाणञ्च तदधश्चक्रमेव च ॥ २५ ॥

१ "सिद्धिदायिनी" इत्यत्र "भोगदायिनी" इति पाठान्तरम्।
२ "देशे" इत्यत्र "भागे" इति पाठान्तरम्।
३ "यस्य" इत्यत्र "येन" इति पाठान्तरम्।

सुचारुदशनां नित्यां पीनोन्नतपयोधराम्।
त्रिभङ्गस्थानसंस्थानां महिषासुर मर्द्दिनीम् ॥ २५ ॥
मृणालायतसंस्पर्शां दशबाहुसमन्विताम्।
त्रिशूलं दक्षिणेध्येयं खड्गंचक्रमधःक्रमात् ॥ २६ ॥
तीक्ष्णवाणंतथाशक्तिं वाहुजङ्घेषुविभ्रतीम्।
खेटकं पूर्णचापञ्च पाशमङ्कुशमुद्धृताम् ॥ २७ ॥
घण्टां वापरशुं वापिवामतः सन्निवेशयेत्।
रक्तचन्दनसिक्ताङ्गीं रक्तमाल्यपरिच्छदाम् ॥ २८ ॥
सिंहस्थां परमेशानीं ब्रह्मविष्णुशिवार्च्चिताम्।
प्रेतस्थाञ्च महामायां रक्तपद्मासन स्थितां ॥ २९ ॥
सिंहस्थाञ्च तथा दुर्गां ध्यायेत् परममोक्षदाम्।
शिवः प्रेतोमहादेवो ब्रह्मालोहितपङ्कजः ॥ ३० ॥
विष्णुः सिंह इतिख्यातः वाहनानिमहौजसः।
स्वमूर्त्त्यावाहनं नैव तेषां देवि प्रयुज्यते ॥ ३१ ॥
तत्तन्मूर्त्यन्तरं कृत्वावाहनत्वं गतास्त्रयः।
शिवप्रेते कदाचित्साकदाचिद्रक्तपङ्कजे ॥ ३२ ॥
कदाचित् केशरिपृष्ठे वसते परमेश्वरि।
कामकाले शिवप्रेते वसतेसिंहवाहिनी ॥ ३३ ॥
अस्यामहिषमर्द्दिन्याः प्रियं सखीगणं शृणु ॥ ३४ ॥

इति श्रीकालीविलास-तन्त्रेएकविंशतिपटलः समाप्तः।

# अथ द्वाविंशपटलः ।

श्रीतत्पुरुष उवाच ।

चण्डां चण्डवतीं विद्यां चामुण्डां चण्डनायिकाम् ।
उग्रचण्डां प्रचण्डाञ्च चण्डोग्रां चण्डनामिकां ॥ १ ॥
शक्तिभिर्वेष्टिता माभिर्विजयां सिंहवाहिनीं[1] ।
शृणुमन्त्रं प्रवक्ष्यामिमर्द्दिन्या मोक्षदायकम् ॥ २ ॥
मायाबीजं समुद्धृत्य दुर्गेदुर्गे पदं ततः ।
ततोरक्षपदं भद्रे तदन्ते वह्निवल्लभा ॥ ३ ॥
नातः परतरं मन्त्रं लक्ष्यं[2] तन्त्रे सुलोचने ।
दशाक्षरं महामन्त्रं चोद्धृत्य निगदामिते ॥ ४ ॥
मायाबीजं समुद्धृत्य ततोदुर्गेपदं प्रिये ।
वह्निजाया तदन्ते च सर्व्वसिद्धिप्रदामता ॥ ५ ॥
मायाबीजं समुद्धृत्य दुर्गायै तदनन्तरम् ।
वह्निजायां परे दत्त्वा एकधा प्रजपेद्यदि ॥ ६ ॥
कोटि वंश्यान् समादाय वैकुण्ठं स च गच्छति ।
दुर्गे दुर्गे तथाचोक्त्वा वह्निजाया ततःपरम् ॥ ७ ॥
एषाविद्या महाविद्या चतुर्वर्ग फलप्रदा ।
मायाबीजं समुद्धृत्य तथान्ते[3] वह्निवल्लभा ॥ ८ ॥
एषातित्र्यक्षरीविद्या मर्द्दिन्यादोषवर्ज्जिता ।
त्वं दुर्गे त्र्यक्षरं मन्त्रं चतुर्व्वर्ग प्रदायकम् ॥ ९ ॥
क्लीं दुर्गे रक्षणि पदं नमइत्यक्षरं ततः ।
मायाबीजं समुद्धृत्य वह्निजाया परे तथा ॥ १० ॥
चतुर्द्दशाक्षरीविद्या सर्व्वदोषविवर्ज्जिता ।
क्लीं दुर्गे त्र्यक्षरं मन्त्रं चतुर्व्वर्गप्रदायकम् ॥ ११ ॥

---

१ "वाहनीं" इत्यत्र "संस्थितां" इति पाठान्तरम् ।
२ "लक्ष्यं तन्त्रेसु" इत्यत्र "लक्षतन्त्रेसु इति पाठान्तरम् ।
३ "तथान्ते" इत्यत्र "तदन्ते" इति पाठान्तरम् ।

दुर्गापञ्चाक्षरं मन्त्रं ब्रह्मोपेन्द्रादिपूजितम्।
त्वं दुर्गेरक्षणिपदं जपात् सिद्धिप्रदायकम्॥ १२॥
क्लीं दुर्गेरक्षणिद्वन्द्वं नम इत्यक्षरं ततः।
मायावीजं समुद्धृत्य वह्निजायापरेततः॥ १३॥
चतुर्द्दशाक्षरीविद्या सर्व्वदोषविवर्ज्जिता।
आद्यन्ते प्रणवं माया यदिस्याद्वरवर्णिनि॥ १४॥
तदेषा षोड़शोविद्या सर्व्वकामफलप्रदा।
षोड़शी मन्त्रविज्ञानं विना श्रीनगनन्दिनि॥ १५॥
यत्किञ्चित् क्रियतेकर्म्म निष्फलं पूजनादिकं।
तस्मादवश्यं ज्ञातव्यं मद्दिन्याः षोड़शाक्षरं॥ १६॥
यन्नोक्तं सर्व्वतन्त्रेषु अधुना कथयामिते।

ह्रास्वाणिक्षरर्गेदुर्गेदु क्लीं॥

दशाक्षर मिदं प्रोक्तं विपरीतं विलोमकं॥ १७॥
विपरीत परिज्ञानात् शीघ्रसिद्धिः प्रजायते।
अज्ञानाद्विपरीतस्य न सिद्धिर्जायते कलौ॥ १८॥
एवं सर्व्वत्र वोद्धव्यं दशविद्यासुसुन्दरि।
श्रीकृष्णकोटि मन्त्रेषु शिवमन्त्रे तथैव च॥ १९॥
प्रकृतञ्चानुलोमञ्च विपरीतं विलोमकं।
मतान्तरं विपरीतं शृणुत्वं प्राणवल्लभे॥ २०॥
( ॐ क्लीं ह्रास्वाणिक्षरर्गेदुर्गेदु क्लीं ॐ )
त्रयोदशाक्षरं मन्त्रं, विपरीतमिदं मतं।
( ॐ क्लीं क्लीं ह्रास्वार्गेदुर्गेदुणिक्षरसु क्लीं क्लीं ॐ )
विपरीतमिदं मन्त्रं दुर्गायाः षोड़शाक्षरं॥ २१॥
गेंदुॐत्र्यक्षरं मन्त्रं सर्व्वकामफलप्रदं।

"गेंदुर्गेदुॐ"

इति पञ्चाक्षरं मन्त्रं सर्व्वतन्त्रसुगोपितं॥ २२॥
यत्रयत्रविनिर्द्दिष्टं तत्रैवं परिकल्पयते।
मतान्तरं विपरीतं शृणुस्व प्राणवल्लभे॥ २३॥

चपलाबुद्धिसंयुक्ता बुद्धिसिद्धिस्तथैव च ।
अणिमाशशिमा प्रोक्ता चन्द्रविन्दु समन्विता ॥ २४ ॥
कथितेति मया देवि सर्व्वसिद्धिप्रदा मता ।
प्रयोगञ्चास्यवच्यामि सावधानावधारय[1] ॥ २५ ॥

( ह्रुँरंश्रोँ )

एवं सर्व्वत्रवोडव्यं प्रतिवीजेषु सुन्दरि ।
प्रथमं दशधाजप्त्वा ततोवीजं समुच्चरेत् ॥ २६ ॥
शृणुस्वैकाक्षरं मन्त्रं त्रिविधं नगनन्दिनि ।
चपलासुसमासीनाबुद्धिः पद्मदलेक्षणा ॥ २७ ॥
अणिमा सुसुखीप्रोक्ता चन्द्रविन्दुसमन्विता ।
एकाक्षरी मयाप्रोक्ता शृणु देवि वदामि ते ॥ २८ ॥
वर्त्तुलाक्षीसुरासीना सुन्दरी महिमागुणा ।
चन्द्रविन्द्वात्मिका नित्यादुर्गावीजमितीरितम् ॥ २९ ॥
चपलाच ततो देवि चन्द्रविन्दु समन्विता ।
त्रिविधा कथिताविद्या एकाक्षरी च मोक्षदा ॥ ३० ॥

श्रीदेव्युवाच ।

चञ्चलाञ्च कथं जप्त्वा मोक्षःस्यादहमे प्रभो[2] ।
तमोगुणा च चपला सर्व्वसंहारकारिणी ॥ ३१ ॥
तस्याश्चोच्चारणाद्देव कथं मोक्षमवाप्नुयात् ॥ ३२ ॥

श्रीतत्पुरुष उवाच ।

देवित्वमतिधन्यासि सुन्दरि प्राणवल्लभे ।
त्रिकोण कुण्डलीमात्रा नित्याश्रीप्रकृतिः परा ॥ ३३ ॥
मात्रासरस्वती साक्षात् शरच्चन्द्रशतप्रभा ।
वामरेखा भवेद्ब्रह्म तरुणार्क्कसमन्विता ॥ ३४ ॥
दक्षरेखा विष्णुरूपा शरच्चन्द्र शतप्रभा ।
अधोरेखा रुद्ररूपा दलिताञ्जन सन्निभा ॥ ३५ ॥

---

१ "सावधानावधारय" इत्यत्र "सावधानाच्च धारय" इति पाठान्तरम् ।
२ "हदमेप्रभो" इत्यत्र "वरवर्णिनि" इति पाठान्तरम् ।

श्रीईश्वर सदाशिवौ मात्रायां संस्थितावुभौ ।
व्यापकात् श्रीशिवज्योतिः प्रकृत्यन्तर्गतं सदा ॥ ३६ ॥
त्रिकोणाभ्यन्तरे शून्यो विन्दुः परमकुण्डली ।
अरुणादित्यसङ्काशो विन्दुरूपपरिच्छदः ॥ ३७ ॥
विन्दुमध्यगतं शून्यं कोटिचन्द्र प्रदायकम् ।
सएवपरमंब्रह्म शिवः परमकारणम् ॥ ३८ ॥
नातः परतरं तत्त्वं मर्हिन्येकाक्षरेषु च ।
इतिते कथितं भक्त्या तथाशुश्रुषया प्रिये ॥३९ ॥

इति श्रीकालीविलास-तन्त्रे द्वाविंशतिपटलः समाप्तः ।

---

## अथ त्रयोविंशतिपटलः ।

श्रीदेव्युवाच ।

देवेन्द्र हृदयात् शल्यं कुरु दूरं कृपानिधे ।
सानित्यामर्द्दिनीदेवी प्रतप्तकनकप्रभा ॥ १ ॥
दलिताञ्जनसंकाशा कथं मे कृपया वद ।

श्रीदेव उवाच ।

न वक्तव्यं महेशानि न वक्तव्यं कदाचन ।
या नित्यामर्द्दिनी देवी गौराङ्गी दीर्घलोचना ॥ २ ॥
सा देवी परमानित्या अकस्मात् कामपीड़िता ।
कामार्त्ताकामविन्यासा सर्व्वदाकामवर्ज्जिता[१] ॥ ३ ॥
पीड़िता कामवाणेन दलिताञ्जनसन्निभा ।
सहसाभून्महेशानि दलिताञ्जन चिक्कणा ॥ ४ ॥
कोटिकन्दर्पलावण्यं विजित्यनगनन्दिनी ।
सदाशिवमहाप्रेते चारुदेहे सुविस्मिता ॥ ५ ॥
यदाभूत्तद्दिन्दुगौरा कालोक्तावयवा-कृतिः ।
गौरीदेहात् समासन्ना कृष्णाङ्गी कालिकापरा ॥ ६ ॥
या गौरी गौरदेहासाभूत्वातिष्ठति सर्व्वदा ।
विपरीतं भवेत् सर्व्वं तस्यहस्ते शुचिस्मिते ॥ ७ ॥
अस्त्वञ्च वामदाक्षिण्यं कामपीठात् प्रजायते ।
सदाशिवोपरिस्थित्वा ब्रह्माण्डं क्षोभमानयेत् ॥ ८ ॥
दक्षहस्ते स्थितो वाणो वामहस्ते द्रुतं ययौ ।
वामहस्तात्तथा वाणो दक्षहस्तं तथाययौ[२] ॥ ९ ॥
सर्व्वं विपर्य्ययं देवि सहसाभूत् सुरेश्वरि ।
सदाशिवस्य संस्पर्शाद्दलिताञ्जन चिक्कणम् ॥ १० ॥

---

१ "सर्व्वदा कामवर्ज्जिता" इत्यत्र 'यदिसाकामवर्ज्जिता" इति पाठान्तरम् ।
२ तथाययौ इत्यत्र ययौ प्रिये इति पाठान्तरं ।

अमृतं परमेशानि सहसाभूत् परात्परम् ।
योमृताज्जायते कृष्णोदलिताञ्जन चिक्कणम् ॥ ११ ॥
तं रक्तचरणद्वन्द्वं आरक्त करपङ्कजम् ।
तथारक्तोष्ठ युगलं पुण्डरीक दलेक्षणम् ॥ १२ ॥
सर्व्वमङ्गल मङ्गल्यं दृष्ट्वैव सहसा भवत् ।
कालिकायास्तनद्वन्द्वममृतैः परिपूरितम् ।
अमृतं द्विविधं शुक्लं दलिताञ्जन चिक्कणम् ॥ १३ ॥
निरीक्ष्यवालकं काली क्रोड़े कृत्वा सुरार्च्चिते ।
चुचुम्बे वदनं तस्य वालकस्य वरानने ॥ १४ ॥

श्रीवालक उवाच ।

स्तनपानं देहि मात र्देहिदेवि कृपां कुरु ।
तस्य तद्वचनं श्रुत्वा वालकस्य च कालिका ॥ १५ ॥
तिष्ठ पुत्र नास्ति चिन्ता अमृताक्तं स्तनं पिव ।
तच्छ्रुत्वा वचनं तस्याः कालिकायाः शुचिस्मिते ॥ १६ ॥
अनिशं प्रपिवेत् कृष्णोमृतं मलविवर्ज्जितम् ।
गीयते तेन सर्व्वेषु कृष्णमाता च कालिका ॥ १७ ॥
ध्यानं चास्याः प्रवक्ष्यामि शृणुत्वं नगनन्दिनि ।
येन ध्यानेन देवेशि चतुर्व्वर्गं मवाप्नुयात् ॥ १८ ॥
जटाजूट समायुक्तां चन्द्रार्द्ध कृत शेखराम् ।
पूर्णचन्द्रमुखीं देवीं त्रिलोचन समन्विताम् ॥ १९ ॥
दलिताञ्जन संकाशां दशवाहुसमन्विताम् ।
नवयौवन सम्पन्नां दिव्याभरण भूषिताम् ॥ २० ॥
सुचारुदशनां नित्यां सुधापुञ्जसमन्विताम् ।
शृङ्गार रससंयुक्तां सदाशिवोपरिस्थिताम् ॥ २१ ॥
दिङ्मण्डलोज्ज्वलकरीं ब्रह्मादि परिपूजिताम् ।
वामे शूलं तथा खड्गं चक्रं वाणं तथैव च ॥ २२ ॥
शक्तिञ्च धारयन्तीं तां परमानन्दरूपिणीम् ।
खेटकं पूर्णचापञ्च पाशमङ्कुश मेवच ॥ २३ ॥
घण्टाम्वापरशुंवापि दक्षहस्तेच भूषिताम् ।
उग्रां भयानकीं भीमां भेरुण्डां भीमनादिनीम् ॥ २४ ॥

कालिका जटिलाञ्चैव भैरवीं पुत्र वेष्टिताम् ।
आभिःशक्तिभिरष्टाभिः सहितां कालिकां परां ॥ २५ ॥
सुप्रसन्नां महादेवीं कृष्णक्रोड़ां परात्पराम् ।
चिन्तयेत् सततं देवीं धर्म्मकामार्थ मोक्षदाम् ॥ २६ ॥
महामोक्षप्रदां नित्यां ध्यायेत् परमगोपिताम् ।
इति ते कथितं ध्यानं ध्यात्वामोक्षपदं लभेत् ॥ २७ ॥
ब्रह्मणोदिवसस्यान्ते कालीक्रोड़ात् शुचिस्मिते ।
राधासमीपं देवेशि यदा यास्यति वालकः ॥ २८ ॥
अत्यन्तविपरीतासाभविष्यति दिनान्तरे ।
इति ते चञ्चलापाङ्गि ध्यानभेदः प्रकीर्त्तितः ॥ २९ ॥
पुत्रेण रहितं ध्यानं मन्वन्तर द्वितीयके ।
एकधाध्यान मात्रेण सर्व्वसिद्धीश्वरोभवेत् ॥ ३० ॥

इति श्रीकालीविलासतन्त्रे त्रयोविंशतिपटलः समाप्तः ।

# अथ चतुर्व्विंशतिपटलः।

श्रीदेव उवाच।

स्तनं पीत्वा वालकृष्णो यदाह मातरं प्रति।
तत्शृणुष्व महामाये कृपया कालिकां शुभाम्॥ १॥
स्तनजन्यं तवक्षारं गोलोक सुखदायकम्।
नातः परतरं किञ्चित् त्रैलोक्ये सुखदायकम्॥ २॥
नातः परतरं देव्य-मृतात् कोटिगुणाधिकम्।
कुतोलब्धमिदं क्षीरं कुत्रोत्पन्नञ्च मे वद॥ ३॥
वालकस्य वचः श्रुत्वा किमाह शृणु कालिका।

श्रीकालिकोवाच।

शृणु पुत्र महाभाग कृष्ण कमललोचन।
न गव्य स्तनजं पुत्र अमृतं नित्य नूतनं॥ ४॥
सहस्रदल पद्माच्च उद्धृत्य कृष्णसुन्दर।
पुत्र ब्रह्माण्डगुप्तं वै अमृतामृत मव्ययम्॥ ५॥
यात्रासरस्वतीरेवा यमुना पुस्करा तथा।
गोलोकं यत्तुहेपुत्र वैकुण्ठं तदुदाहृतम्॥ ६॥
तस्माद्वै कमलात् पुत्र उत्पन्नं चामृतं द्रवम्।
तेनामृतेन वैपुत्र स्तनं मे परिपूरितम्॥ ७॥
अमृतं पिवहेपुत्र स्तनं मे परिपूरितम्।
अमृतं पिवहेपुत्र जरामरण वर्ज्जितम्॥ ८॥

श्रीवालक उवाच।

भोजनादमृतस्यास्य सर्व्वं मे विस्मृतं ययौ।
कोवाहं कस्यपुत्रोहं तन्मे कथय संप्रति॥ ९॥

श्रीकालिकोवाच।

शृणु पुत्र महावाहो पुण्डरीक दलेक्षण।
सदाशिवस्तव पिता माताहं तव वालक॥ १०॥
त्वमेवचेश्वर ज्योतिर्गुणातीतः शिवः सदा।
सगुणाहं सदा पुत्र निर्गुणापि कदाचन॥ ११॥

अमृतं गुणमित्याहुः शरीरे तन्ममस्थितम्।
अमृताज्जननं पुत्र तव निर्णय ईरितः॥ १२॥
ईश्वरस्त्वं हि देवानां ईश्वराख्या च यातु वै[1]।
गौरदेहात् समुत्पन्ना अहं काली विपर्य्यया॥ १३॥
तवमातास्म्यहं पुत्र अयोनि सम्भवा स्मृता।
कोटिकन्दर्पवाणेन विद्धाहं कालिकासुत॥ १४॥
त्वमेव चेश्वरज्योतिः पुत्रोमि निर्गुणः सदा।
अद्यप्रभृति हे पुत्र सगुणस्त्वं गुणाकरः॥ १५॥
अद्यप्रभृति हे पुत्र पुण्डरीकदलेक्षण।
निर्गुणस्त्वं हि सगुणः कार्य्यकारणतत्परः॥ १६॥
कल्पान्तरे तु पुत्र त्वं राधावल्लभतां भज[2]।
तवाङ्गं पुण्डरीकाच्च सुधापुञ्जमयं विभुम्॥ १७॥
विन्दुरूपाद्यहं पुत्र ततः सगुणविग्रहा।
अनन्तशक्तिराद्याहं सर्व्वदेवाधिदेवता[3]॥ १८॥

श्रीबालक उवाच।

अनन्तशक्तिराद्यात्वं वाणविद्धाकथं भवेः।
वाणविद्धा कथं मात—स्तत्सर्व्वं कृपया वद॥ १९॥

श्रीकालिकोवाच।

शृणु पुत्र प्रवक्ष्यामि सावधानोवधारय।
कन्दर्पवाणविद्धा हि न भूतास्मिकदाचन॥ २०॥
कामवीजेन विद्धाहं तेनाङ्गं जर्जरं मम।

श्रीबालक उवाच।

हे मातः कामवीजं मे कृपया कथ्यतां त्वया।
यदि नोकथ्यते मातस्तनुत्यागं करोम्यहम्॥ २१॥

श्रीकालिकोवाच।

रे पुत्र बालकस्त्वं हि तनुत्यागः कथं तव।
सुधापानाच्च हे पुत्र—तव देहं सुदुर्जयम्॥२२॥

---

१ 'ईश्वराख्यातुयातुवै'' इत्यत्र "ईश्वराख्यो यतस्तुवै'' इति पाठान्तरम्।

२ 'भज'' इत्यत्र ''व्रज'' इति पाठान्तरम्।

३ ''सर्व्वदेवाधिदेवता'' इत्यत्र ''तेनाङ्गजननं मम'' इति पाठान्तरम्।

अधुना शृणुवक्ष्यामि कन्दर्पवाणनिर्णयम्।
काममन्मथकन्दर्पमकरध्वजसंज्ञकाः ॥२३॥
मीनकेतुस्तथा पुत्र—पञ्चवणा इति स्मृताः[1]।

श्रीबालक उवाच

सदर्थं पञ्चवाणस्य कृपया मयि कथ्यताम् ॥२४॥
श्रुत्वा तवमुखान्मातर्भवामि सगुणोप्यहम्।

श्रीकालिकोवाच।

धन्यास्मि कृष्णपुत्र त्वं धन्योऽसि कमलेक्षण ॥२५॥
कामः क्लीँ मन्मथः क्लीँच कन्दर्प ऐँ इति स्मृतः।
ह्रँकारो मीनकेतुः स्यात् क्लूँकारो मकरध्वजः ॥२६॥
चपलाक्षीषु चासोना विन्दुर्मोक्षप्रदायकः।
विन्दुमध्यगता नित्या चन्द्रिका कमलेक्षणा ॥२७॥
चन्द्रिकान्तर्गता नित्या देवी शशिमुखी गुणा।
चन्द्रार्द्धविन्दुसंयुक्ता कामवीजमितीरितम् ॥२८
शृणु ध्यानं प्रवक्ष्यामि वीजस्य कमलेक्षण।
दलिताञ्जनसंकाशां चतुर्ब्बाहुसमन्विताम् ॥२९॥
खड्गमुण्डधरां वामे दक्षिणे चाभयं वरम्।
मुण्डमालाधरां नित्यां कटाक्षविशिखोज्ज्वलाम् ॥३०॥
सिन्दूर तिलकोद्दीप्तां अञ्जनाञ्चितलोचनाम्।
ध्यात्वा देवीं महामायां ध्यात्वा वीजं जपेद् यदि ॥३१॥
सर्व्वसिद्धीश्वरो भूत्वा परं ब्रह्माधिगच्छति।
ध्यानमेतत्तु रे पुत्र कोटितन्त्रेषु सम्मतम् ॥३२॥
दिवसे च तथा रात्रौ प्रहरे प्रहरे सुत।
ज्ञात्वा प्रहर निष्कर्षं दिवा रात्रौ च जापकः ॥३३॥
दलिताञ्जनसंकाशात् स्थाने पीठं नियोजयेत्।
अरुणादित्यसंकाशां शरच्चन्द्रप्रदीपिकाम् ॥३४॥
अधुना शृणु हे पुत्र ध्यानभेदं वदामिते।
यन्नोक्तं सर्व्वतन्त्रेषु अधुनानिगदामिते ॥३५॥
यदुक्तं प्रथमं ध्यानं प्रातःकाले प्रतिष्ठितम् ॥३६

इति श्रीकालीविलासतन्त्रे चतुर्विंशतितमः पटलः समाप्तः।

---

१ इति स्मृता इत्यत्र इतीरिता इति पाठान्तरम्।

# अथ पञ्चविंशतिपटलः ।

मध्याह्नस्य महाभाग ध्यानं हि निगदामि ते ।
अरुणादित्यसंकाशां प्रथमप्रहरे दिवा ॥१॥
शरच्चन्द्रप्रतीकाशां चतुर्ब्बाहुधरां पराम् ।
द्वितीयप्रहरे पुत्र इति मे निश्चयं वचः ॥२॥
तप्तकाञ्चनसंकाशां चतुर्ब्बाहुमयीं पराम् ।
तृतीयप्रहरे त्वेवं सर्व्वबीजेषु भावना ॥३॥
रहस्य मेतद्धि पुत्र कोटिबीजेषु सम्मतम् ।
अधुना संप्रवक्ष्यामि शृणुष्वान्यार्थसङ्गतम् ॥४॥
शरच्चन्द्रप्रतीकाशां चतुर्ब्बाहुधरां पराम् ।
शुक्लाम्बरपरीधानां शुक्लाभरणभूषिताम् ॥५॥
दिव्यवस्त्रपरीधानां[1] दिव्यचन्दन--चर्च्चिताम् ।
इति ते कथितं ध्यानं ब्रह्मादीनामगोचरम् ॥६॥
अधुना शृणु वक्ष्यामि शुद्धं मन्मथ साधनम् ।
दिव्यसन्धिषु चासीना चन्द्रिकालघिमागुणा ॥७॥
चन्द्रिकासु समासीना गिमा शशिमुखी तथा ।
चन्द्रिकान्तर्गता नित्या मन्मथाचरमीरितम्[2] ॥८॥
अधुना संप्रवक्ष्यामि ध्यानं पत्तनगोपुरम् ।
जवाकुसुमसंकाशां चतुर्ब्बाहुधरां पराम् ॥९॥
सिन्दूरतिलकोद्दीप्ता मञ्जनाञ्चितलोचनाम् ।
दिव्याम्बरपरीधानां दिव्याभरणभूषिताम् ॥१०॥
ध्यात्वैवं साधकश्रेष्ठः सर्व्वसिद्धीश्वरो भवेत् ।
ध्यानान्तरमिदं प्रोक्तं सर्व्वतन्त्रेषु गोपितम् ॥११॥
अधुना शृणु वक्ष्यामि शुद्धं कन्दर्पसाधनम् ।
सुभगासु समासीना सुशीला चारुलोचना ॥१२॥

---

१ दिव्यचन्दन इत्यत्र हरिचन्दन इति पाठान्तरम् ।

२ मन्मथाचरमीरितं इत्यत्र प्रफुल्लाचमितीरितमिति पाठान्तरम् ।
तदनन्तरं चन्द्रबिम्बात्मिका नित्यामन्मथाख्यमितीरितं इति श्लोकार्द्धं क्वचिदेव पुस्तके दृश्यते

चन्द्रविन्द्वात्मिकानित्या कन्दर्पाख्यमितीरितम् ।
ध्यानञ्चास्याः प्रवक्ष्यामि शृणुपुत्रसुलोचन ॥१३॥
प्रतप्त काञ्चनाभासां चतुर्ब्बाहुधरां पराम् ।
अभयं वरदं वामे दक्षिणे शङ्खमव्ययम् ॥१४॥
तदधः कमलं पुत्र चतुर्व्वर्गप्रदायिकाम् ।
दिव्याम्बरपरीधानां दिव्याभरणभूषिताम् ॥१५॥
दिव्यचन्दनलिप्ताङ्गां सिन्दूरतिलकोज्ज्वलाम् ।
कटाक्षविशिखोपेतां अञ्जनाञ्चितलोचनाम् ॥१६॥
अधुना संप्रवक्ष्यामि शृणुध्यानं सुखास्पदम् ।
पीतपद्मप्रतीकाशां लसत्कोकनदेक्षणाम् ॥१७॥
चतुर्भुजां त्रिनेत्राञ्च सिन्दूरतिलकोज्ज्वलाम् ।
कटाक्षविशिखोपेतभ्रूलता परिशोभिताम् ॥१८॥
अभयं वरदं वामे दक्षिणोर्द्ध्वे सुदर्शनम् ।
तदधः संस्थितं शूलं चतुर्वर्गप्रदायकम् ॥१९॥
अधुना संप्रवक्ष्यामि शृणुत्वं मीनकेतनम् ।
मोहिनीमुसमासीना शुक्लपीताद्ध संयुता ॥२०॥
चन्द्रविम्बात्मिका नित्या मकरध्वजमीरितम् ।
इति ते कथितं वीजं चतुर्व्वर्गप्रदायकम् ॥२१॥
अधुना संप्रवक्ष्यामि ध्यानं तन्मीनकेतनम् ।
मोहिनीषु समासीना शुक्लपद्मदलेक्षणा ॥२२॥
शुक्लाम्बरसमासीना शङ्खहस्ता सुशोभना ।
चन्द्रार्द्ध विन्दुसंयुक्ता मीनकेतनमीरितम् ॥२३॥
ध्यानमस्याः प्रवक्ष्यामि शृणुपुत्रसुलोचन[1] ।
जवाकुसुमसङ्काशां चतुर्ब्बाहुधरां पराम् ॥२४॥
नानावेशधरां देवीं शरच्चन्द्रनिभाननाम् ।
दिव्याम्बरपरीधानां दिव्याभरणभूषिताम् ॥२५॥
कटाक्षविशिखोपेतां सिन्दूरतिलकोज्ज्वलाम् ।
अभयं वरदं वामे दक्षिणोर्द्ध्वे च पट्टिशम् ॥२६॥

---

१ शृणु पुत्र सुलोचन इत्यत्र यतो मोक्षप्रदं भवेत् इति पाठान्तरम् ।

खड्गञ्च तदधस्तस्याः सर्व्वास्त्र—सारसंग्रहम्।
यज्ज्ञात्वा साधको याति अव्ययं विन्दुमण्डलम् ॥२७॥
मण्डलं परमं मोक्षं पूर्णानन्दस्वरूपिणीम्[1]।
परस्य ब्रह्मणः पुत्र तदन्तं गृहमीरितम् ॥२८॥
शब्दरूपमयं विन्दु मण्डलं मातृकाक्षरम्।
इति ते कथितः पुत्र सर्व्ववीजस्य निर्णयः ॥२९॥

इति श्रीकालीविलासतन्त्रे पञ्चविंशतितमः पटलः समाप्तः।

---

१ पूर्णानन्दस्वरूपिणीं इत्यत्र पूर्णानन्दरसैर्युतां इति पाठान्तरम्।

## अथ षड्‌विंशतिपटलः।

श्रीबालक उवाच।

नमस्ते कालिके मातः चरणे पतितोऽस्म्यहम्।
कृपया कथ्यतां मातरन्यबीजं सुधोपमम्॥१॥

श्रीकालिकोवाच।

शृणु तत्कथ्यते पुत्र कोटिबीजानि सन्ति वै।
बीजानां परमं श्रेष्ठं बीजं सप्तदशाक्षरम्॥२॥
कामो मन्मथकन्दर्पौ मीनकेतुः प्रकीर्त्तितः।
यन्नोक्तं शृणुतत्पुत्रकथयामितवाग्रतः॥३॥
न कस्मैचित् प्रवक्ष्यामि पुत्रत्वात् कथयामि ते।
पूर्णोदर्य्यादिमासिद्धिर्बहुलाचाणिमा तथा॥४॥
महाकालमयो भूत्वा चन्द्रार्द्धविन्दुसंयुता।
त्रैदैवतं परं बीजं बीजाना मणुमीरितम्॥५॥
ध्यानमस्य प्रवक्ष्यामि अतिगोप्यं परात्परम्।
शुक्लविद्युत्प्रतीकाशं रक्तविद्युत्प्रदीपकम्॥५॥
दलिताञ्जनसंकाशं चतुर्बाहुधरं विभुम्।
शङ्खचक्रगदापद्मधारिणं वनमालिनम्॥७॥
पीताम्बरपरीधानं लसत्कोकनदेक्षणम्।
ध्यात्वाबीजं पठेत् यस्तु प्रणवं पापमोचनम्॥८॥
विनाप्रणवविज्ञानं गायत्र्या निष्फलो जपः।
कथितं कामबीजञ्च रजःसत्त्वतमात्मकम्॥९॥
अधुना शृणुपुत्रत्वं मायाबीजस्य साधनम्।
ईश्वरः सुसमासीनो विन्दुर्ब्रह्मप्रपूजितः॥१०॥
विन्दोरन्तर्गताबुद्धिर्नित्याकमललोचना।
बुद्ध्यपरिसमासीना[1] णिमा शशिमुखीगुणा॥११॥

---

१ बुद्ध्यपरिसमासीना णिमाशशिमुखीगुणा इत्यत्र बुद्धेरुपरि हे पुत्र णिमाशशिमुखी तथा इति पाठान्तरम्।

चन्द्रविन्द्वात्मिकानित्या मायादेवीत्वितीरिता[१] ।
मतान्तरं प्रवक्ष्यामि द्विविधं शृणुसुन्दर ॥१२॥
ईश्वरी सुसमासीना कामिनी चारुलोचना ।
कालीसिद्धिसमासीना गिमात्रिगुण चोदना ॥१३॥
चन्द्रविन्द्वात्मिका नित्या मायावीजमितीरितम् ।
चपलान्तर्गताज्ञेया गिमा शशिमुखी तथा ॥१४॥
चन्द्रविन्द्वात्मिका नित्या माया लिखनमीरितम् ।
ध्यानमन्यत्प्रवक्ष्यामि सावधानावधारय ॥१५॥
जवासिन्दूरसंकाशां चतुर्ब्बाहुधरां पराम् ।
खड्गमुण्डधरां वामे दक्षिणे शूलमुद्गरे ॥१६॥
दिव्याम्बरपरीधानां दिव्याभरणभूषिताम् ।
सिन्दूरतिलकोद्दीप्ता मञ्जनाञ्चितलोचनाम् ॥१७॥
कटाक्षविशिखोपेत भ्रूलता परिशोभिताम् ।
ध्यात्वैवं साधकश्रेष्ठ एकधा प्रजपेद्यदि ॥१८॥
त्रिकोटिकुलमुद्धृत्य परं ब्रह्माधिगच्छति ।
रहस्यं शृणु हे पुत्र वीजोच्चारणसिद्धिदम् ॥१९॥
बुद्धेरुच्चारणञ्चादौ चपलायास्ततःपरम् ।
सर्व्वान्ते च तथा विन्दोरुच्चारणमितीरितम् ॥२०॥
एवं सर्व्वत्रवोद्धव्यं वीजवीजेषु सिद्धिदम् ।
मायाबुद्धिरितिख्याता विन्दोरन्तर्गता तथा ॥२१॥
माया वीजस्य हे पुत्र भक्त्याते परिकीर्त्तितम् ।
अधुना शृणु हे पुत्र रमावीजं सुदुर्लभम् ॥२२॥
रमाज्येष्ठा तथा रौद्री विन्दुत्रयविनिर्म्मिता ।
रमासु सङ्गताज्येष्ठा रौद्रीज्येष्ठासुसङ्गता ॥२३॥
भ्रामरी कथ्यते तेन विन्दुमण्डलसङ्गता ।
रमासु संस्थिता ब्रह्मा विष्णु ज्येष्ठा सुसंस्थिता ॥२४॥
रौद्रीषु संस्थितो रौद्री गुणत्रयविनिर्णयः ।
रमा जेष्ठा सन्धि सूक्ष्मे निर्गुणस्य तव स्थितिः ॥२५॥

---

१ मायादेवीत्वितीरिता इत्यत्र माया लिखनमीरितं इति पाठान्तरम् ।

रे पुत्रकेश्वर—ज्योतिस्त्वमेव नान्यथा क्वचित्।
रौद्री ज्येष्ठा बुद्धिसूर्य्या निर्गुणासा शिवस्थितिः ॥२६॥
यः शिवः परमं ब्रह्म सर्व्वं व्याप्यविजृम्भते।
रमा रजोगुणानित्या अरुणादित्यसन्निभा ॥२७॥
ज्येष्ठा सत्त्वगुणा चैव शरच्चन्द्रप्रभासका।
दलिताञ्जनसंकाशा रौद्रीतमगुणा स्मृता ॥२८॥
ऊर्द्ध शक्तिद्वये रेखे विद्युदाभे च मोक्षदे।
ऊर्द्ध रेखाद्वये पुत्र चतुष्कोणे मनःस्थितिः ॥२९॥
चतुष्कोणात्मके चैव आत्मनः स्थितिनिर्णयः।
अधोभागे चतुष्कोणे परमात्मावसेद्ध्रुवम् ॥३०॥
दक्षभागे चतुष्कोणे निवासश्चान्तरात्मनः।
अधोभागे चतुष्कोणे ज्ञानात्मापि वसेद्ध्रुवम् ॥३१॥
एकादशेन्द्रियाणाञ्च पञ्च शून्येषु संस्थितिः।
पञ्चशून्ये च भूतानां स्थितिश्चैव न संशयः ॥३२॥
इति ते ग्रामणी बीजं रजःसत्त्वतमात्मकम्।
कथितं कृष्ण हे पुत्र स्मरणान्मोक्षदं भवेत् ॥३३॥
ज्येष्ठा विन्दुगतानित्या सुस्थिरा चारुणप्रभा।
सुस्थिरान्तर्गतो विन्दुर्विन्दुमध्ये च मोहिनी ॥३४॥
अस्त्रविद्यात्मिकानित्या परमाबीजमीरितम्।
प्रथमे ग्रामणी बीजं सुस्थिरा तदनन्तरम् ॥३५॥
ततस्तु मोहिनी बीजमर्द्धचन्द्रं ततःपरम्।
ततो विन्दुं समुच्चार्य्य संयोगोच्चारणं ततः ॥३६॥
रमा बीजस्य हे पुत्र रहस्यं परिकीर्त्तितम्।
ध्यानमस्याः प्रवक्ष्यामि शृणु हे पुत्रसुन्दर ॥३७॥
रक्तविद्युल्लताकारां शुक्लविद्युल्लता कृतिम्।
दलिताञ्जनसंकाशां चतुर्बाहुधरां पराम् ॥३८॥
अरविन्दस्थितां नित्यां ब्रह्मादिपरिपूजिताम्।
सिन्दूरतिलकोद्दीप्ता मञ्जनाञ्चितलोचनाम् ॥३९॥
ध्यानमात्रेण हे पुत्र सर्व्वसिद्धीश्वरो भवेत्।
सर्व्वसिद्धीश्वरो भूत्वा चैकधा बीजमुच्चरेत् ॥४०॥

एकोच्चारणमात्रेण जगज्ज्ञानं ततो लभेत् ।
जगज्ज्ञानगतं पुत्र कल्पभेदे द्रुतं भवेत् ॥४१॥
कल्पभेदे च सत्ये च त्रेतायां कमलेक्षण ।
सर्व्वसिद्धीश्वरो भूत्वा विहरेत् क्षितिमण्डले ॥४२॥

इति श्रीकालीविलास-तन्त्रे षड़्विंशतितमः पटलः समाप्तः ।

## अथ सप्तविंशतिपटलः ।

अधुना संप्रवक्ष्यामि कूर्चं परमदुर्लभम् ।
दीर्घघोरासु चासीना वरुणारक्तलोचना ॥१॥
चन्द्रविन्द्वात्मिकानित्या कूर्चाख्या चतथेरिता ।
शृणु ध्यानं प्रवक्ष्यामि सावधानावधारय ॥२॥
दलिताञ्जन संकाशां प्रफुल्लकमलेक्षणाम् ।
चतुर्बाहुधरां भीमां सिन्दूर तिलकोज्ज्वलाम् ॥३॥
कटाक्षविशिखो पेत भ्रूलता परिशोभिताम् ।
दिव्याम्बरपरीधानां दिव्याभरणभूषिताम् ॥४॥
अभयं वरदं वामे दक्षिणे खड्गखर्परे ।
एकधा ध्यानमात्रेण सर्व्वसिद्धीश्वरो भवेत् ॥५॥
शृणु चान्यत् प्रवक्ष्यामि स्त्रीवीजं परमाद्भुतम् ।
मेधासिद्धिषु चासीना सुभगा कमलेक्षणा ॥६॥
सुभगा सुसमासीना गौरीपद्मदलेक्षणा ।
चन्द्रविन्द्वात्मिका नित्या स्त्रीबीजमतिसुन्दरम् ॥७॥
यास्त्री सैववधूबीजं दुर्गा विलाससम्मतम् ।
ध्यानञ्चास्याः प्रवक्ष्यामि सावधानेन संशृणु ॥८॥
सदा षोड़शवर्षीयां पीनोन्नतघनस्तनीम् ।
चतुर्भुजां शशिमुखीं स्मेरानन सरोरुहाम् ॥९॥
दिव्याम्बरपरीधानां दिव्याभरणभूषिताम् ।
सिन्दूरतिलकोद्दीप्ता मञ्जनाञ्चितलोचनाम् ॥१०॥
कटाक्षविशिखोपेतां रङ्गिनीं कुसुमप्रभाम् ।
शृणु पुत्र पदं कृष्ण लिखनं मोक्षदर्शनम् ॥११॥
चन्द्रिकान्तर्गतानित्या विशालाक्षाणिमागुणा ।
कोर्त्तेरन्तर्गतानित्या विषमा चारुलोचना ॥१२॥
इति ते कथितं कृष्ण लिखनञ्चफलप्रदम् ।
चत्वारिंशत्कोणयुक्तं कृष्णस्यैकाक्षरस्य च ॥१३॥
स्मरणात्फलमाप्नोति दर्शनात् पापनाशनम् ।
ध्यानमात्रेण हे कृष्ण सर्व्वसिद्धीश्वरो भवेत् ॥१४॥

शृणु स्वाहापदं भद्र सर्व्वसिद्धिप्रदायकम् ।
ईश्वरे शिव आसीना रौद्री कमललोचना ॥१५॥
रौद्री सिद्धिषु चासीना कौमुदो कमलेक्षणा ।
कालीसिद्धिषु चासीना शूक्ष्मापद्मदलेक्षणा ॥१६॥
इति ते कथिता स्वाहा चतुर्व्वर्गप्रदा मता ।
शृणु ध्यानं प्रवक्ष्यामि ध्यात्वासिद्धीश्वरो भवेत् ॥१७॥
चतुर्भुजां महामायां लसत्कोकनदेक्षणाम् ।
जवा सिन्दूरसंकाशां स्मेरानन सरोरुहाम् ॥१८॥
दिव्याम्बरपरीधानां दिव्याभरणभूषिताम् ।
ध्यानमात्रेण हे पुत्र सर्व्वसिद्धीश्वरो भवेत् ॥१९॥
बीजानां लिखनं यन्त्रं कलिकालस्य सम्मतम् ॥२०॥
स्वर्णादिलिखनं यन्त्रं[1] सत्यादियुगसम्मतम् ।
अप्रशस्तं कलौ यन्त्रं विप्राणां शृणु रे सुत ।
काममन्मथ कन्दर्प—प्रणवं मकरध्वजम् ॥२१॥
मीनकेतुयुगं मायां रमा कूर्चद्वयं तथा ।
श्रीबीजं[2] वह्निजायान्ता विद्या ब्रह्मादिपूजिता ॥२२॥
एषाते कथिता पुत्र आद्यन्ते हंससंयुता ।
झिल्ली वोभयमध्ये कूर्चान्ता सप्तदशाक्षरी ॥२३॥

इति श्रीकालीविलासतन्त्रे सप्तविंशतितमः पटलः समाप्तः ।

---

१ लिखनं यन्त्रं इत्यत्र रचितं यन्त्रं इति पाठान्तरम् ।
२ श्रीबीजं इत्यत्र स्त्रीबीजं इति पाठान्तरम् ।

# अथाष्टाविंशतिपटलः ।

श्रीशिव उवाच ।

अथैवं संप्रवक्ष्यामि चाङ्कुशं प्राणवल्लभे ।
चपलाक्षी समासीना चन्द्रिकालघिमागुणा ॥१॥
चान्द्री च सुसमासीना सिञ्जिनी चाणिमा तथा ।
चन्द्रविन्द्वात्मिकानित्या चाङ्कुशाख्याह्नीतीरिता ॥२॥
बीजानां कथितं ध्यानं कार्य्यं पूर्व्वमतेन च ।
लिखनं सर्व्वबीजानां ध्यानञ्चागिरिशं तथा ॥३॥
अज्ञात्वा प्रजपेत् यस्तु तस्य सिद्धिर्नजायते ।
ब्रह्मणो दिनमासाद्य रहस्यं परिकीर्त्तितम् ॥४॥
तस्मात् यत्नेन वोद्धव्यं बीजानां तत्त्वमद्भुतम् ।
मतान्तरं प्रवक्ष्यामि शृणु चार्व्वङ्गिलेखनम् ॥५॥
चन्द्रिकान्तर्गताचारु चपला लोललोचना ।
चपलान्तर्गतोविन्दुर्विन्दुमध्ये च सिञ्जिनी ॥६॥
चन्द्रविन्द्वात्मिकानित्या चतुर्व्वर्गप्रदामता ।
ध्यानमस्याः प्रवक्ष्यामि सावधानेन तत् शृणु ॥७॥
प्रतप्तकाञ्चनाभासां चतुर्ब्बाहुसमन्विताम् ।
दिव्याम्बरपरीधानां दिव्याभरणभूषिताम् ॥८॥
द्विभुजां पद्मसुचार्य्यवराभयविधारिणीम् ।
सिन्दूरतिलकोद्दीप्ता मञ्जनाञ्चित लोचनाम् ॥९॥
कटाक्षविशिखो पेत भ्रूलतापरिशोभिताम् ।
मायारूपाङ्कुशं वामे बिभ्रतीं परमेश्वरीम् ॥१०॥
ध्यात्वैवं साधकः पुत्र मुच्यते भवबन्धनात् ।
चुम्बनं देहिमे पुत्र तव वक्त्रं सुधामयम् ॥११॥
इत्युक्त्वा सहसा काली चुचुम्बे मुखपङ्कजम् ।
भिल्लिराया महामन्त्रं जपत्वं पुत्रसुन्दर ॥१२॥
इति ते पुत्रवात्सल्यात् कथितं कमलेक्षण ।
कोटिषोड़शमन्त्राणां सक्कज्जापफलं लभेत् ॥१३॥

दिनान्ते ब्रह्मणो राधा वल्लभत्वं गमिष्यसि[1] ।
ममाङ्ग सम्भवा राधा त्रिपुरा त्रिपुरेश्वरी ॥१४॥
गोलोकबीजं गोलोकं नान्यलोकं कदाचन ।
गोलोकबीजं हे पुत्र तत्स्थाने सुदुर्लभम् ॥१५॥
गोलोकबीजं हे पुत्र जपस्व कमलेक्षण ।
ब्रह्मणो दिवसस्यान्ते गोलोकात् कमलेक्षण ॥१६॥
भविष्यन्ति पञ्चकृष्णाः पञ्चनन्दाः शिवाक्षरात् ।
मन्मथेषु स्थितो बिन्दुः स्तत्र गोलोकमव्ययम् ॥१७॥
अनाद्यन्तमनव्यक्तं नित्यं सगुणमव्ययम् ।
पञ्चाशन्मातृकाशब्द सहिता बिन्दुमण्डला ॥१८॥
बिन्दुमध्यगतं शून्यं कोटिचन्द्रप्रदीपकम् ।
परं ब्रह्म शून्यरूपं शिवं परमकारणम् ॥१९॥
शिवस्य कारणं बिन्दुर्ब्रह्माक्षरनिरूपणम् ।
परस्य ब्रह्मणश्चाङ्गं पञ्चाशन्मातृकाक्षरम् ॥२०॥
अंशत्वञ्च शरीरत्वं सर्व्वदेवेषु संस्थितिः ।
ब्रह्मणस्त्वङ्गविज्ञानं विना हे कमलेक्षण ॥२१॥
यत्र यत् क्रियते कर्म्म व्यर्थं भवति निश्चयम् ।
जायन्ते ब्रह्मणस्त्वङ्गात् ब्रह्माद्याः पञ्चदेवताः ॥२२॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते पञ्चविध ज्योतिर्ब्रह्माद्याः पञ्चदेवताः ॥२३॥
विभृत्यगुण कर्म्माणि कार्य्यकारण तत्पराः ॥२४॥
षट्शिवज्योतिषां मध्ये ईश्वरस्त्वं हि मे सुत ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥२५॥
ततःपरशिवो देवः षट्शिवाः परिकीर्त्तिताः ।
दलिताञ्जनसंकाशोऽधुना त्वं वैगुणाकर ॥२६॥
सदाशिवस्तव पिता माताहं कमलेक्षण ।
शिवोपरिस्थिता देवी सिंहपृष्ठे कदाचन ॥२७॥
महिषेषु तथा पुत्र कदाचिद्रक्तपङ्कजे ।
विपरीतमिदं प्रोक्तं वासनं नान्यदासनम् ॥२८॥

१ वल्लभत्वं गमिष्यसि इत्यत्र वल्लभस्त्वं भविष्यसि इति पाठान्तरम् ।

चापञ्च खेटकस्थाने चापस्ताने च खेटकम् ।
शक्तिस्थाने तथा चापं वाणि च शक्तिरव्यया ॥२९॥
शूलस्थाने तथा खड्गं खड्गस्थाने च शूलकम् ।
चक्रस्थाने तथा पाशं पाशस्थाने तथाङ्कुशम् ॥३०॥
घण्टाञ्च परशुष्ठाने घण्टां परशुसंस्थिताम् ।
कस्मिन् हस्ते स्थितं मुण्डं चतुर्व्वर्गप्रदायकम् ॥३१॥
अतिगुह्यं विपरीतं पुत्रवुद्ध्या प्रकीर्त्तितम् ।
हे पुत्र चुम्बनं देहि तुभ्यं दास्यामि राधिकाम् ॥३२॥
इत्युक्ता सहसाकाली चुचुम्बे मुखपङ्कजम् ।
निःशव्दोऽयं महाज्योतिर्निर्विकारो निरञ्जनः ॥३३॥
विन्दुमध्यगतो नित्यः कथितश्चादिनिर्णयः ।
योविन्दुः सैव चाद्यास्यात् शब्दरूपा सनातनी ॥३४॥
तत एव परं ब्रह्म शव्दे शव्दे विजृम्भते ।
कथ्यते तेनहेपुत्र आद्यायाः सुविनिर्णयः ॥३५॥
विना चाद्या परिज्ञानं कोटिज्ञानं वृथा भवेत् ।
श्रुत्वा मातृवचः कृष्ण उवाच मातरं पुनः ॥३६॥

श्रीकृष्ण उवाच ।

हे मातः कथ्यतां नित्यां यदितेऽस्ति दयामयि ।
कदापश्यामि तां राधां कासा राधा कुतस्थितिः ॥३७॥
तन्मे कथय हे मातर्हृत्कम्पञ्च भवेन्मम ।
राधा राधेति मे चिन्ता सर्व्वदेव प्रजायते ॥३८॥

श्रीकालिकोवाच ।

गोलोकमन्मथे बीजे वैद्युते विन्दुमण्डले ।
यद्विन्दौ सुन्दरी नित्या तत्रराधा विराजते ॥३९॥
विन्दुना शृणु रे पुत्र मद्विन्या गमनं यतः ।
मद्विन्या अङ्गसम्भूता चाहं ब्रह्मादिपूजिता ॥४०॥
करालवदना काली सुन्दरी चाङ्ग - सम्भवा ।
नमस्ते कालिके मातर्धर्म्मार्थकाममोक्षदे ॥४१॥
दलिताञ्जनसंकाशे नमस्ते बीजरूपिणि ।
कामरूपे नमस्तुभ्यं नमो मन्मथ रूपिणि ॥५२॥

कन्दर्परूपिणि मातर्नमस्तुभ्यं नमो नमः ।
ॐकार रूपिणि तुभ्यं नमस्तुभ्यं नमो नमः ॥४३॥
नमस्ते शङ्कराकारे मीनकेतुस्वरूपिणि ।
मायारूपि नमस्तुभ्यं कमला राजरूपिणि ॥४४॥
कूर्च्चराजे नमस्तुभ्यं नमस्ते श्रीस्वरूपिणि ।
वह्निजाया स्वरूपे त्वं नमस्तुभ्यं नमो नमः ॥४५॥
झिल्लिरा रूपिणि तुभ्यं नमस्तुभ्यं नमो नमः ।
श्रुत्वा कृष्णमुखात् स्तोत्रं यदाह कालिका परा ॥४६॥
ध्यात्वा मन्त्रं जपित्वा च स्तोत्रमेतत्तु यः पठेत् ।
तस्मै तुष्टा च झिल्लीरा प्रसन्ना च प्रसीदति ॥४७॥
झिल्लीरा मन्त्रविज्ञानं ध्यानं स्तोत्रं विना तथा ।
यत्किञ्चित् क्रियते कर्म्म सर्व्वं भवति निष्फलम् ॥४८॥

इति श्रीकालीविलासतन्त्रे श्रीकृष्णोक्त झिल्लिरा स्तोत्रं नामाष्टाविंशतिपटलः समाप्तः ।

---

## अथोनत्रिंशत्पटलः ।

श्रीतामस उवाच ।

कालिका—कृष्णसंवादः कथितो भक्तितस्तव ।
विपरीतमिदं प्रोक्तं सारात्सारं परात्परम् ॥१॥
यन्नोक्तं सर्व्वतन्त्रेषु गिरिजे प्राणवल्लभे ।
तव प्रीत्या महेशानि प्रोक्तं गुह्यतमं परम् ॥२॥

श्रीदेव्युवाच ।

पृच्छाम्येकं महाभाग योगीन्द्र योगनायक ।
कामबीजादिबीजानां कथ्यतां लिखनक्रमः ॥३॥

श्रीसद्योजात उवाच ।

यत्कल्पे भवेद्रामो रावणश्चापि राक्षसः ।
तत्कल्पसम्मतं नित्यं चतुर्युगस्य सम्मतम् ॥४॥
कथयामि महेशानि लिखनं सर्व्वसम्मतम् ।
जम्बुद्वीपस्य वर्षे च कलिकाले च भारते ॥५॥
क्षीर पीठात्मकं वर्णं युगाद्यास्तनसंयुतम् ।
त्रिंशत् कोष्ठात्मकं बीजं स्मरणात् फलदायकम् ॥६॥
चन्द्रिकाङ्गगतानित्या चपला चपलेक्षणा ।
चपलान्तर्गतं पुष्पं विद्युत्कोटिप्रदीपकम् ॥७॥
अनिमेन्दु मुखी सिद्धिः पुष्पमध्ये च संस्थिता ।
चन्द्रार्द्ध विन्दुसंयुक्तं कामबीजमितीरितम् ॥८॥
चन्द्रिकान्तर्गतो नित्यो हरः पद्मदलेक्षणः ।
हरस्य मध्यविन्दौ चाणिमा शशिमुखी विशेत् ॥९॥
चपलान्तर्गतानित्या हरः पद्मदलेक्षणः ।
हरस्य मध्यविन्दौ च सदा शशिमुखी वशेत् ॥१०॥
चन्द्रविन्दुसमायुक्तं मन्मथं परिकीर्त्तितम् ।
हरवर्गेषु चासीनः शिवः पद्मदलेक्षणः ॥११॥
पूर्व्वोक्तं कथितं देव लिखनं मकरस्य च ।
मकरञ्च यथा देवि तथैव मीनकेतनम् ॥१२॥

चपलान्तर्गतावुद्धिः प्रफुल्लकमलेक्षणा ।
चपलानुगतं[1] पुष्पं विद्युत्कोटिसमप्रभम् ॥१३॥
पुष्पमध्येस्थितानित्या रेचिका लिखनक्रमः ।
अतःपरं प्रवक्ष्यामि श्रीबीजलिखनं शृणु ॥१४॥
मङ्गलायामध्यविन्दौ ईश्वरीकमलेक्षणा ।
ईश्वरीपद्मगर्भा च पुष्पमध्ये च रेचिका ॥१५॥
चन्द्रविन्दुमयीनित्या श्रिया लिखनमीरितम् ।
अतःपरं प्रवक्ष्यामि चाङ्कुशं वरवर्णिनि ॥१६॥
चन्द्रिकान्तर्गतानित्या सुस्थिरा कमलेक्षणा[2] ।
सुस्थिरान्तर्गतानित्या सिञ्जिनीब्रह्मपूजिता ॥१७॥
चन्द्रविन्द्वात्मिकानित्या लिखनं त्वङ्कुशस्य च ।
हरस्य मध्यविन्दौ सा विशालाक्षी सुशोभना[3] ॥१८॥
हरिणाक्षीषु चासीना युवा च ह्यणिमागुणा ।
चन्द्रविन्द्वात्मिका विद्या दिदं लिखनमीरितम् ॥१९॥
एवं सर्व्वत्र वोद्धव्यः वीजानां लिखनक्रमः ।
विना लिखनविज्ञानं वीजानां नगनन्दिनि ॥२०॥
विफलं जायते सर्व्वं जपयज्ञार्च्चनादिकम् ।
सर्व्वं तस्य भवेद्व्यर्थं किं पुरश्चरणादिभिः ॥२१॥

इति श्रीकालीविलासतन्त्रे ऊनविंशत्तमः पटलः समाप्तः ।

---

१ चपलानुगतं इत्यत्र चपलान्तर्गतं इति पाठान्तरम् ।
२ कमलेक्षणा इत्यत्र कमलोज्ज्वला इति पाठान्तरम् ।
३ साविशालाक्षी इत्यत्र च हरिणाक्षी इति पाठान्तरम् ।

## अथ त्रिंशत्पटलः ।

श्रीपार्व्वत्युवाच ।

कथ्यतां मे महाभाग श्रीवीज—लिखनक्रमः ।
अति गोप्यो महापुण्यो भक्त्याति परिकीर्त्तितः ॥१॥
दुर्गाविलासतन्त्रोक्तं मयोक्तं शङ्करप्रिये ! ।
चतुर्वर्गप्रदं देवि ! सर्व्वसिद्धिप्रदायकम् ॥२॥

श्रीदेव्युवाच ।

श्रुतं सर्व्वं महाभाग दुर्गाया बोधनादिकम् ।
शरत्काले नवम्यां वै प्रातरावाहयेत् शिवाम् ॥३॥
नवमीषु महाभाग यदि चार्द्रा न लभ्यते ।
किं कर्त्तव्यं तदादेव तन्मे कथयसाम्प्रतम् ॥४॥

श्रीअघोर उवाच ।

शृणुपुत्र महाभाग शृणु हे पार्व्वतीसुत ।
अधुना संप्रवक्ष्यामि कलिकालस्य सम्मतम् ॥५॥
आर्द्रायां बोधयेद्देवीं मूलेनैव प्रवेशयेत् ।
पूर्व्वोत्तराभ्यां संपूज्य श्रवणेन विसर्ज्जयेत् ॥६॥

श्रीतत्पुरुष उवाच ।

सदर्थं चास्य हेपुत्र सावधानो वधारय ।
यानित्या नवमी कृष्णा ब्रह्मविष्णुशिवार्च्चिता ॥७॥
आर्द्रालक्ष्मीरिति ख्याता नित्या श्रीविष्णुवल्लभा ।
आर्द्रा ऋक्षेणसंयुक्ता यद्दिने नवमी भवेत् ॥८॥
तद्दिने बोधनं पुत्र प्रशस्तं कलिसम्मतम् ।
नवमी सहिता चार्द्रा यदि स्यात् रात्रियोगतः ॥९॥
प्रातःकाले समिज्ञायां बोधनं तत्रभैरव ।

श्रीईशान उवाच ।

आर्द्रर्क्षं यः परित्यज्य नवम्यां बोधनञ्चरेत् ॥१०॥
स ऋणी कमलादेव्या भूत्वा याति परत्र च ।
आर्द्रर्क्षं यः परित्यज्य दुर्गादेवीं[1] प्रपूजयेत् ॥११॥

---

आर्द्रर्क्षं यः परित्यज्य दुर्गादेवीं प्रपूजयेदित्यत्र आर्द्रान्तरां परित्यज्य यदि दुर्गां प्रपूजयेदिति पाठान्तरम् ।

विफला तस्य सापूजा कदाचिन्नफलप्रदा[1] ।
सा पूजा राक्षसी पूजा दुर्गापूजा कथं भवेत् ॥१२॥
इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः ।
श्रीवृक्षे बोधयामित्वां मन्त्रमेतत् यथा भवेत् ॥१३॥
नवमीं न स्पृशे दार्द्रा नवमी केवला पिवा ।
प्रातः प्रबोधयेद्देवीं तदा बोधफलं भमेत् ॥१४॥
आर्द्रा योगा भावतो न मन्त्रमेतदुदीरितम् ।
मन्त्र पाठं विना देव बोधनं विफलं लभेत् ॥१५॥
तस्माद् यत्नेन कर्त्तव्यं तिथ्यृक्षेण समन्वितम् ।
तदा तुष्टोऽस्मग्रहं पुत्र पार्व्वती सहितः सुत ॥१६॥
श्रवणा च भवेत् पुत्र सर्व्वसिद्धिप्रदायिका ।
अन्यथा पूजकस्यापि ऋक्षाः स्युः क्रोधसंयुताः ॥१७॥
हरन्तितस्य हेपुत्र पूजायां यत्फलानि वै ।

श्रीतामस उवाच ।

आर्द्रर्क्षं न हि संत्याज्यं यदीच्छेदात्मनः शुभम् ।१८॥
आर्द्रर्क्षं न हि संत्याज्यं संत्याज्यं न कदाचन ।
सर्व्वं विपर्य्ययं पुत्र कलिकाले गृहे गृहे ॥१९॥
भविष्यति महाभागे इति मे निश्चयं वचः ।
युगभेदमते नैव कर्त्तव्यं फलदायकम् ॥२०॥
इति ते कथितं पुत्र कलिकालस्य सम्मतम् ।
विशेषं शृणु हेपुत्र बोधनस्य विनिर्णयम् ॥२१॥
नेत्रबीजत्रयञ्चैव रावणस्यं ततःपरम् ।
इषे मासि ततः पुत्र माहात्म्यं मधुकैटभम् ॥२२॥
पठित्वा फलमाप्नोति बोधनस्य च भैरव ।
तदैव जयदुर्गाया वोधनं भवति ध्रुवम् ॥२३॥

इति श्रीकालीविलासतन्त्रे विंशतमः पटलः समाप्तः ।

१ कदाचिन्नफलप्रदा इत्यत्र कदाचित्तु फलप्रदा इति पाठान्तरम् ।

## अथैकत्रिंशत्पटलः ।

श्रीपार्व्वत्युवाच ।

देवदेव दयानाथ संसारार्णवतारक ।
पृच्छाम्येकं महाभाग चरणे पतितास्म्यहम् ॥१॥
यदि नो कथ्यते देव विमुञ्चामितदातनुम् ।

श्रीभैरव उवाच ।

वीजानाञ्च ध्यानभेद मत्यन्तगोपनं महत् ॥२॥
ध्यानभेदं प्रवक्ष्यामि यद्ध्यात्वा सिद्धिभाग्भवेत् ।
तप्तकाञ्चन संकाशां महिषासुरमर्द्दिनीम् ॥३॥
द्वितीयप्रहरे नित्यां शरच्चन्द्रप्रदीपकाम् ।
जवाकुसुमसंकाशां तृतीयप्रहरे तथा ॥४॥
दलिताञ्जनसंकाशां चतुर्थप्रहरे प्रिये ! ।
एवं रात्रावपि ध्यानं प्रहरे प्रहरे शुभम् ॥५॥
माया बीजस्य चार्व्वङ्गि—रहस्यं परिकीर्त्तितम् ।
अधुना संप्रवक्ष्यामि वंवीजस्य च लक्षणम् ॥६॥
अरुणादित्यसंकाशां विन्दुं ब्रह्म परिच्छदाम् ।
प्रातःकाले महेशानि एवं नित्यं प्रचिन्तयेत् ॥७॥
शुक्लविद्युत्प्रतीकाशं द्वितीयप्रहरे शुभम् ।
तप्तकाञ्चनसंकाशं तृतीयप्रहरे शुभम् ॥८॥
दलिताञ्जनसंकाशं प्रतुर्थप्रहरेमतम् ।
एवं रात्रौ महेशानि सिद्धिः स्यादुत्तरोत्तरम् ॥९॥
अधुना संप्रवक्ष्यामि कामवीजस्य साधनम् ।
दलिताञ्जनसंकाशां प्रथमप्रहरे तथा ॥१०॥
शुक्लविद्युत्प्रतीकाशां द्वितीयप्रहरे पराम् ।
रक्तविद्युत्प्रतीकाशां तृतीयप्रहरे तथा ॥११॥
स्वर्ण—ज्योतिः प्रतीकाशां चतुर्य प्रहरे तथा ।
रात्रावपि महेशानि एवमेव विचिन्तयेत् ॥१२॥

कन्दर्पं शृणु चार्व्वङ्गि—सर्व्वसिद्धिप्रदायकम् ।
अरुणादित्यसंकाशां प्रातःकाले विभावयेत् ॥१२॥
दलिताञ्जनसंकाशां द्वितीयप्रहरे पराम् ।
तप्तकाञ्चनसंकाशां तृतीयप्रहरे पराम् ॥१३॥
शुक्लविद्युत्प्रतीकाशां चतुर्थ प्रहरे तथा ।
रात्रावपि महेशानि भावना सिद्धिरुत्तमा ॥१४॥
जायते नात्रसन्देहो गिरिजे नगनन्दिनि ।
अधुना संप्रवक्ष्यामि श्रीबीजं ब्रह्मसम्पदम् ॥१५॥
शुक्लविद्युत् प्रतीकासां प्रथमप्रहरे तथा ।
शङ्खेन्दु कुन्दसंकाशां द्वितीयप्रहरे शुभाम् ॥१६॥
भ्रमद्भ्रमरसंकासां तृतीयप्रहरे तथा ।
तप्तकाञ्चनसंकाशां चतुर्थ प्रहरे सदा ॥१७॥
रात्रावपि महेशानि एवमेव विभावयेत् ।
सर्व्वरात्रिमभिव्याप्य अरुणादित्यसन्निभाम् ॥१८॥

श्रीवामदेव उवाच ।

अधुना संप्रवक्ष्यामि श्रीबीजं परमाद्भुतम् ।
भ्रमद्भ्रमरसंकाशां प्रथमप्रहरे सदा ॥१९॥
रात्रावपि महेशानि एवमेव विभावना ।
अधुना संप्रवक्ष्यामि शृणु हे कूर्चलक्षणम् ॥२०॥
दलिताञ्जनसंकाशां प्रथमप्रहरे सदा ।
अरुणादित्यसंकाशां द्वितीयप्रहरे तथा ॥२१॥
तृतीयप्रहरे कूर्चां तप्तकाञ्चन सन्निभाम् ।
चतुर्थ प्रहरे कूर्चां शरच्चन्द्रप्रदीपकाम् ॥२२॥
रात्रावपि महेशानि एवमेव विचिन्तयेत् ।
अधुना संप्रवक्ष्यामि चाङ्कुशं प्राणवल्लभे ॥२३॥
शुक्लविद्युत्प्रतीकाशां प्रथमप्रहरे पराम् ।
तप्तहाटकसंकाशां द्वितीयप्रहरे तथा ॥२४॥
दलिताञ्जनसंकाशां तृतीयप्रहरे पराम् ।
अरुणादित्यसंकाशां चतुर्थ प्रहरे तथा ॥२५॥
रात्रावपि महेशानि एवमेव विचिन्तयेत् ।
प्रणवं शृणु चार्व्वङ्गि—चतुर्व्वेदात्मकं परम् ॥२६॥

रक्तज्योतिर्मयीं नित्यां प्रथमप्रहरे पराम् ।
द्वितीयप्रहरे नित्यां शरच्चन्द्रप्रदीपकाम् ॥२७॥
तृतीयप्रहरे भद्रे तप्तहाटकसन्निभाम् ।
चतुर्थ प्रहरे देवि ! दलिताञ्जनसन्निभाम् ॥२८॥
रात्रावपि महेशानि एवमेव विभावना ।
अधुना संप्रवक्ष्यामि वह्निजायां परां शृणु ॥२९॥
प्रथमप्रहरे भद्रे जवासिन्दूरसन्निभाम् ।
द्वितीयप्रहरे देवि शरच्चन्द्रप्रदीपकाम् ॥३०॥
तृतीयप्रहरे भद्रे दलिताञ्जनसन्निभाम् ।
चतुर्थ प्रहरे चैव तप्तकाञ्चनसन्निभाम् ॥३१॥
रात्रावपि महेशानि एवमेव विचिन्तयेत् ।
प्रथमप्रहरे बुद्धिं शरच्चन्द्रप्रदीकाम् ॥३२॥
द्वितीयप्रहरे नित्यां दलिताञ्जनसन्निभाम् ।
तृतीयप्रहरे भद्रे अरुणादित्यसन्निभाम् ॥३३॥
चतुर्थप्रहरे देवि ! तप्तस्वर्णसमप्रभाम् ।
एवं मनसि चार्व्वङ्गि भावना सिद्धिरुत्तमा ॥३४॥
यथा मनस्तथा बुद्धिरेकमेव न वै पृथक् ।
बुद्धिं भित्त्वा मनो याति अनुलोमजपात् प्रिये ॥३५॥
मनोभित्त्वा यथा बुद्धिं याति याति करोति च ।
अनेन विधिना भद्रे यावज्जीवं विभावयेत् ॥३६॥
तदेव महती सिद्धिर्नान्यथा कल्पकोटिभिः ।
भविष्यति महेशानि सत्यं सत्यं न संशयः ॥३७॥

इति श्रीकालीविलासतन्त्रे एकत्रिंशत्तमः पटलः समाप्तः ।

# अथ द्वाविंशत्पटलः ।

श्रीदेव्युवाच ।

पृच्छाम्येकं महाभाग योगीन्द्रगणनायक ।
सदर्थं सर्व्ववर्णानां स्तोत्रं कवचमेव च ॥१॥
देवता च ऋषिश्छन्द स्तथैव ध्याननिर्णयः ।
अष्टसिद्धिपरिचयः प्रकृतिः प्रत्ययस्तथा ॥२॥
प्रत्येकं सर्व्ववर्णानां कोवावेदविनिर्णयम् ।
श्रीमहाकुण्डलि विन्दो रहस्यं द्वादशागमम् ॥३॥
षट्चक्रात् संश्रुतं सर्व्वं इदानीं वदभावना ।

श्रीईश्वर उवाच ।

रक्तं नीलं तथा पीतं शङ्खेन्दुकुन्दसन्निभम् ॥४॥
ईशानस्य वचः श्रुत्वा यदाह तामसः शृणु ॥५॥
कामिनो कौमुदी ज्योत्स्ना शशिवक्त्रासुलोचना ।
विरूपाक्षी विशालाक्षी वैष्णवी मीनकेतना ॥६॥
नर्त्तकी नृत्यरूपा च निर्म्मलाध्यान सिञ्जिनी ।
सुरा ज्योतिर्मयी घोरा प्रफुल्लपद्मलोचना ॥७॥
स्वभावतः सदा वर्णैः कुन्देन्दुधवलोज्ज्वला ।
प्रथमप्रहरे चैताः शरच्चन्द्रप्रदीपकाः ॥८॥
द्वितीयप्रहरे वर्णैः दलिताञ्जनसन्निभाः ।
तृतीयप्रहरे वर्णैः अरुणादित्यसन्निभाः ॥९॥
चतुर्थ प्रहरे भद्रे तप्तकाञ्चनसन्निभाः ।
रात्रावपि महेशानि एवमेव विचिन्तयेत् ॥१०॥
तामसस्य वचः श्रुत्वा वामो यदाह तत्शृणु ।
चन्द्रिका चन्द्रवदना हरिणाक्षी सुलोचणा ॥११॥
रजोगुणा महाविद्या अरुणा दित्यसन्निभाः ।
प्रथमप्रहरे भद्रे रक्तविद्युत्प्रदीपकाः ॥१२॥
द्वितीयप्रहरे चैताः दलिताञ्जन सन्निभाः ।
तृतीयप्रहरे चैव कुन्देन्दु धवलोज्ज्वलाः ॥१३॥

तप्तहाटकसंकाशाश्चतुर्थप्रहरे तथा।
द्वितीयाशङ्खहस्ता च चक्रहस्ता च चक्रिणी ॥१४॥
विद्या च द्योतिनी नित्या सिन्दूरवर्णसन्निभा।
द्वितीयप्रहरे वर्ण्या दलिताञ्जनसन्निभाः ॥१५॥
तृतीयप्रहरे चैतास्तप्तहाटकसन्निभाः।
चतुर्थप्रहरे भद्रे शरच्चन्द्रप्रदीपकाः ॥१६॥
रात्रावपि महेशानि एवमेव विचिन्तयेत्।
वणी च विमला चैव तथा विलक्षणागुणा ॥१७॥
विशाला विषमानित्या अरुणादित्यसन्निभाः।
द्वितीयप्रहरे वर्ण्या दलिताञ्जनसन्निभाः ॥१८॥
शुक्लविद्युत् प्रतीकाशास्तृतीयप्रहरे तथा।
तप्तकाञ्चनसंकाशाश्चतुर्थप्रहरे मता ॥१९॥
रात्रावपि महेशानि एवमेव विचिन्तयेत्।
शोभा चैव स्वरूपा च सुन्दरी गन्धहा तथा ॥२०॥
गन्धिनी च तथा नित्या चारुणा तरलेक्षणा।
द्वितीयप्रहरे वर्ण्या दलिताञ्जनसन्निभा ॥२१॥
तृतीयप्रहरे वर्ण्यास्तप्तहाटकसन्निभाः।
चतुर्थप्रहरे चैव कुन्देन्दु धवलोज्ज्वलाः ॥२२॥
रात्रावपि महेशानि एवमेव विचिन्तयेत्।
अघोरस्य वचः श्रुत्वा यदाह पुरुषः प्रिये ॥२३॥
तृतीयप्रहरे वर्ण्यास्तप्तहाटकसन्निभाः।
सर्व्वाः पद्मपलाशाक्ष्यः दलिताञ्जनसन्निभाः ॥२४॥
द्वितीयप्रहरे भद्रे अरुणादित्यसन्निभाः।
तृतीयप्रहरे चैतास्तप्तकाञ्चनसन्निभाः ॥२५॥
शरच्चन्द्रप्रतीकाशाश्चतुर्थप्रहरे तथा।
रात्रावपि महेशानि एवमेव विचिन्तयेत् ॥२६॥
पिनाकी शङ्करश्चैव हरो भद्रस्तथैव च।
कल्याणी च ततो देवी शिवा च सिद्धिरूपिणी ॥२७॥
प्रथमप्रहरे चैता दलिताञ्जनसन्निभाः।
रात्रावपि महेशानि एवमेव विचिन्तयेत् ॥२८॥

पुरुषस्य वचः श्रुत्वा यदाह भगवान् शृणु ।
मङ्गला च ततः कीर्त्तिर्मनोबुद्धिर्विलक्षणा ॥२९॥
सर्व्वाः पद्मपलाशाक्ष्यः किङ्कर्य्यो नवयौवनाः ।
दिव्याम्बरपरीधाना दिव्याभरणभूषिताः ॥३०॥
शरच्चन्द्रप्रतीकाशा द्वितीयप्रहरे तथा ।
तृतीयप्रहरे देवि ! दलिताञ्जनसन्निभाः ॥ ३१॥
चतुर्थप्रहरे भद्रे तप्तकाञ्चनसन्निभाः ।
शरच्चन्द्रप्रतीकाशा पञ्चमप्रहरे तथा ॥३२॥
षष्ठाख्यप्रहरे भद्रे शङ्खेन्दुकुन्दसन्निभाः ।
रात्रावपि महेशानि एवमेव विचिन्तयेत् ॥३३॥
पुरुषस्य वचः श्रुत्वा ईशो यदाह तत् शृणु ।
मङ्गला च ततः कीर्त्तिर्मनोबुद्धिर्विलक्षणा ॥३४॥
सर्व्वाः पद्मपलाशाक्ष्यः किशोर्य्यो नवयौवनाः ।
दिव्याम्बरपरीधाना दिव्याभरणभूषिताः ॥३५॥
शरच्चन्द्रप्रतीकाशा द्वितीयप्रहरे तथा ।
तृतीयप्रहरे देवि ! दलिताञ्जनसन्निभाः ॥३६॥
परब्रह्मण उत्पत्तेः कारणं प्रकृतेर्गुणाः ।
मूर्त्तिमन्तो ब्रह्मलोके भूमा वक्तरूपिकाः ॥३७॥
प्रथमप्रहरे वर्ण्णा अरुणादित्यसन्निभाः ।
शरच्चन्द्रप्रतीकाशा द्वितीयप्रहरे तथा ॥३८॥
तृतीयप्रहरे देवि ! दलिताञ्जनसन्निभाः ।
रात्रावपि महेशानि एवमेव विचिन्तयेत् ॥३९॥

इति श्रीकालीविलासतन्त्रे द्वात्रिंशत्तमः पटलः समाप्तः ।

---

# अथ त्रयस्त्रिंशत्पटलः ।

शिव उवाच ।

बीजानां कोण विज्ञानं यत्नतस्त्रायते यतः ।
तेन यन्त्र इति ख्यात ईशान मुख निःसृतः ॥१॥
बीजानां लिखनं देवि ! यथार्थ कोणसम्मतम् ।
तद् यन्त्रं पूजने शस्तं कलिकालस्य सम्मतम् ॥२॥
स्वर्णादिरचितं यन्त्रं सत्यादियुगसम्मतम् ।
जम्बुद्वीपस्य वर्षेतु कलिकाले च भारते ॥३॥
स्वर्णादिरचिते यन्त्रे पूजनात् प्रकटं भवेत् ।
प्रकटे मन्त्रनाशः स्याद्वधबन्धनमेव च ॥४॥
प्रकटे सिद्धिहानिः स्यात् प्रकटे मरणं भवेत् ।
अधुना संप्रवक्ष्यामि बीजानां कोण निर्णयम् ॥५॥
पञ्चत्रिंशत् कोणयुक्तं रमाबीजं प्रकीर्त्तितम् ।
कामबीजं तथा देवि ! त्रिंशत् कोणे न निर्म्मितम् ॥६॥
तामसस्य मुखादेतत् मुनिनन्दननिर्गतम् ।
एकत्रिंशत् कोण युक्तं मन्मथं परिकीर्त्तितम् ॥७॥
वामदेवात् समुद्भूतं शीघ्रं सिद्धिप्रदायकम् ।
अष्टकोणात्मकं नित्यं कन्दर्पं सिद्धिदायकम् ॥८॥
अघोरान्निर्गतमिदं यन्त्रसिद्धेस्तु कारणम् ।
द्वात्रिंशत् कोणसंयुक्तं मकरध्वजमीरितम् ॥९॥
मीनकोतोस्तदा देवि ! कोणसंख्यं प्रकीर्त्तितम् ।
पुरुषान्निर्गतमिदं द्रुतं सिद्धिप्रदायकम् ॥१०॥
सप्तत्रिंशत् कोण माया अष्टकोणञ्च कूर्च्चकम् ।
ईशानान्निर्गतमिदं शीघ्रं सिद्धिप्रदायकम् ॥११॥
अष्टाविंशत् कोणयुक्तं वधूबीजं प्रकीर्त्तितम् ।
द्वाविंशति कोणयुक्तावह्निजाया प्रतीर्त्तिता ॥१२॥
पञ्चकोणात्मकं बीजं प्रणवं पापनाशनम् ।
षट्कोणं वह्निबीजञ्च दशकोणात्मकं नमः ॥१३॥

इति ते कथिता विद्या अधोवक्राद्विनिर्गता ।
जम्बुद्वीप मतानित्या कलिकालस्य सम्मता ॥१४॥
ब्रह्म ज्योतिः ककारे च विष्णुज्योतिस्तथैव च ।
रुद्रज्योतिः ककारे च ईश्वरस्य तथैव च ॥१५॥
ककारे श्रीशिव ज्योतिः ककारे च परं शिवः ।
सर्व्ववर्णेषु बोद्धव्यं ककारमुपलक्षणम् ॥१६॥
षट् शिव ज्योतिषं कोणं तेन कोणमितीरितम् ।
त्रिगुणि त्रिगुणोपेतं त्रिकोणञ्च इतीरितम् ॥१७॥
अनन्तबीजकोणेषु षट् शिव ज्योतिषां स्थितिः ।
आत्मान्तरात्मा परमज्ञानात्मा परमैर्युतः ॥१८॥
तामसान्निर्गतमिदं सर्व्वेषां कोणनिर्णयम् ।
एवं सर्व्वत्र बोद्धव्यं बीजानां नगनन्दिनि ॥१९॥

इति श्रीकालीविलास-तन्त्रे त्रयस्त्रिंशत्तमः पटलः समाप्तः ।

— ——

# अथ चतुस्त्रिंशत्पटलः ।

शिव उवाच ।

अकारादिक्षकारान्तं चन्द्रबिन्दुसमन्वितम् ।
प्रजपेदनुलोमेन विलोमेन मनुं ततः ॥१॥
इष्टमन्त्रं ततो जप्त्वा अक्षरादीन् जपेत्ततः ।
तदा पूतो भवेन्मन्त्रः शापादिदोषसंयुतः ॥२॥
अणि मे कामिनि मातः नमस्तुभ्यं नमोनमः ।
कौमुदित्वणिमे नित्यं ज्योत्स्ना रूपिणि ते नमः ॥३॥
शशिवक्त्रे नमस्तुभ्यं सुलोचनि नमोनमः ।
विरूपाक्षि नमस्तुभ्यं विशालाक्षि नमोनमः ॥४॥
अणि मे वैष्णवितुभ्यं मीनाक्षि चाणि मे नमः ।
नमस्ते नर्त्तकि देवि ! विल्वरूपे नमोनमः ॥५॥
अनिमि निर्म्मलेतुभ्यं सिञ्जिनिति नमोनमः ।
ज्योतिर्मयि नमस्तुभ्यं घोररूपिणि ते नमः ॥६॥
सद्योजातमुखादेषस्तवराजो विनिर्गतः ।

श्रीवामदेव उवाच ।

चन्द्रिके लघिमे तुभ्यं नमस्तुभ्यं नमोनमः ॥७॥
शङ्खहस्तेनमस्तुभ्यं चन्द्रास्येति नमोनमः ।
हरिणाक्षि नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥८॥
सुलोचने नमस्तुभ्यं शङ्खिनिति नमोनमः ।
शङ्खहस्ते प्राप्तिसिद्धे चक्रहस्ते नमोनमः ॥९॥
हे चक्रिणि नमस्तुभ्यं विद्यारूपिणि ते नमः ।
विद्योप प्राप्तिसिद्ध्यर्थं नमस्तुभ्यं नमोनमः ॥१०॥
वामदेव मुखादेषस्तवराजो विनिर्गतः ।

श्रीअघोर उवाच ।

वाणि तेन नमस्तुभ्यं काम्यसिद्धिस्वरूपिणि ॥११॥
प्रकाम्य विमले तुभ्यं पिशालाक्षे नमोनमः ।
हे विशाले नमस्तुभ्यं विषमे च नमोनमः ॥१२॥

अघोरमुखसंमुक्तः स्तवराजः प्रकीर्त्तितः ।

श्रीईशान उवाच ।

नमस्ते महिमे शोभे स्वरूपे ते नमोनमः ॥१३॥
सुन्दरि महिमे तुभ्यं गन्धवाहे नमोनमः ।
गन्धिनि महिमे तुभ्यं नमस्तुभ्यं नमोनमः ॥१४॥
गगणे च नमस्तुभ्यं गानरूपिनिते नमः ॥१५॥
रुद्ररूपि नमस्तुभ्यं ईश्वरि त्वां नमाम्यहम् ।

श्रीतामस उवाच ।

पिनाकिनि नमस्तुभ्यं वशित्वा सिद्धिरूपिणि ॥१६॥
शङ्कररूपिणि तुभ्यं हररूपिणि ते नमः ।
कल्याणि हे नमस्तुभ्यं हररूपिणि ते नमः ॥१७॥
मङ्गले हे नमस्तुभ्यं नमस्ते सिद्धिरूपिणि ।
नमस्ते मङ्गले नित्ये कोणविंशतिसंयुते ॥ १८ ॥
कामावसायिते कीर्त्ते नमस्तुभ्यं नमोनमः ।
मनोरूपि नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥१९॥
बुद्धे मातर्नमस्तुभ्यं विलचणि नमोनमः ।
नानारूपमयितुभ्यं नमस्तुभ्यं नमोनमः ॥२०॥
यइदं पठतिस्तोत्रं त्रिसन्ध्यं शिवसन्निधौ ।
सहसा मन्त्रसिद्धिः स्यात् लचावर्त्तनमात्रतः ॥२१॥
एतत् स्तोत्रं महेशानि कलिकाले पठेत् सुधीः ।
एतत् स्तोत्रं विना देवि ! अन्यस्तोत्रं पठेत्तुयः ॥२२॥
सर्व्वं तस्य भवेत् व्यर्थं चिप्तस्य वचनं यथा ।
एतत् स्तोत्रं पठित्वादौ ततोऽन्यकवचं पठेत् ॥२३॥
पठित्वा सिद्धिमाप्नोति न च मे वचनं मृषा ।
विनाबीजपरिज्ञानं कवचाध्ययनं वृथा ॥२४॥
वर्णस्तवमविज्ञाय स्तवमन्यं वृथा भवेत् ।
वर्णतत्त्व मविज्ञाय पुराणं प्रपठेत्तु यः ॥२५॥
सऋणी सर्व्वदेवानां भूत्वा याति परत्र च ।
ऋणी भूत्वा स पापिष्ठो भेकयोनिषु जायते ॥२६॥
ब्रह्मदिनमभिव्याप्य भेको भवति निश्चितम् ।
दिनान्ते तु महेशानि नाना योनौ प्रजायते ॥२७॥

सम्भ्रष्टः स च पापिष्ठो न पुनर्मानुषो भवेत् ।

श्रीगणेश उवाच ।

पार्व्वत्या निकटे स्थित्वा यत् श्रुतं शिव वक्त्रतः ॥२८॥
तदद्यकथितं सर्व्वं कालीविलाससम्मतम् ।
रहस्यं सर्व्ववीजानां वर्णानां मुनिपुङ्गव ॥२९॥
दिवारात्रपरिज्ञानं प्रथमं प्रहरं तथा ।
विना यत् क्रियते विप्र सर्व्वं विधिविरम्बनम् ॥३०॥
अष्टाङ्ग योगविज्ञानं भक्त्या ते परिकीर्त्तितम् ।
न योगेन विना मन्त्रो मन्त्रेण विफलो हि सः ॥३१॥
द्वयोरभ्यासमात्रेण मन्त्रसिद्धिः प्रजायते ।
विनात्वेकतराभ्यासं मन्त्रसिद्धिर्नजायते ॥३२॥

इति श्रीकालीविलासतन्त्रे चतुस्त्रिंशत्तमः पटलः समाप्तः ।

———

## अथ पञ्चविंशत्पटलः ।

श्रीसुभगोवाच ।

सर्व्वं श्रुतं महाभाग पृच्छाम्येकं वदस्व तत् ।
सुवलो गोपिणी कासा कृपया मयिकथ्यताम् ॥१॥
कृष्णजन्मश्रुतं देव यः कृष्णः ईश्वरस्तु सः ।
यदिनो कथ्यते देव विमुञ्चामि तदा तनुम् ॥२॥

श्रीगणेश उवाच ।

सुभगे सा ब्रह्मरूपा सुवलो कूर्च्चरूपिणी ।
कोटिकन्दर्पलावण्यं विजित्यसुवलो परा ॥३॥
कालीक्रोड़ात् यदा कृष्णो ययौ गोलोकमण्डलम् ।
यदुवाच तदा कृष्णः कालिकां मातरं प्रति ॥४॥
तदद्य ब्राह्मणि देवि कथयामि शृणुष्वतत् ।
पार्व्वत्या निकटे देवि यत् श्रुतं शिववक्त्रतः ॥५॥

श्रीबालक उवाच ।

नमस्ते कालिके मातश्चरणे पतितोऽस्म्यहम् ।
किं करोमि क्व गच्छामि कृपया कथ्यतां मयि ॥६॥
भक्षणं कथ्यतां मातर्ममदेहं सुधामयम् ।
एकोऽहं कलिके मातः सहायो मे कुतोवद ॥७॥

श्रीकालिकोवाच ।

रे पुत्र पुण्डरीकाक्ष त्रिभङ्गमुररीधर ।
महीध्रधर हे पुत्र शब्द ब्रह्मस्वरूपिणी ॥८॥
ह्रूँ कारनादिनी विद्या शक्तिरूपा हिते सुत ।
त्रिभङ्गी त्रिगुणो पेता सुधापुञ्जमयं वपुः ॥९॥
ब्रह्माण्डे मोहिनी चूड़ा अनन्तसुखदा मता ।
मुररी शब्दमात्रेण अनन्तसुखमाप्नुयात् ॥१०॥
प्रथमं मुररी शब्दात् नारीणां षोड़शीं कलाम् ।
प्राप्नोति कृष्ण हे पुत्र दलिताञ्जनचिक्कण ॥११॥

इत्युक्त्वा सहसा काली चुचुम्बे मुखपङ्कजम् ।
गच्छ त्वं त्वरितं पुत्र भिल्लीराजपतत्परः ॥१२॥
गोलोकं तत्समं पुत्र न्यान्यलोकं कदाचन ।
प्रजप्यत्वरितं वीजं गच्छलोकमनव्ययम् ॥१३॥
प्राप्नोसि सुररी शब्दात् कामधेनुमनव्ययम् ।
प्राप्स्यसि द्वादशपदं सुररीशब्दमात्रतः ॥१४॥
तव देहोऽजड़ः पुत्र त्वं ज्योतिरीश्वरः शिवः ।
निर्गुण ईश्वर ज्योतिर्ममस्पर्शाद्गुणोव्ययः ॥१५॥
यमुना पुलिनं यत्रतत्रस्थाने तवस्थितिः ।
न क्षुधा न च तृष्णा च कदाचित्त्वयि बाधते ॥१६॥
द्वितीयदिवसस्यापि कथा मेतां सुदुर्लभाम् ।
इति देव्या वचः श्रुत्वा सत्त्वरं प्रययौ प्रभुः ॥१७॥
गोलोकं प्राप्य श्रीकृष्णः सर्व्वसम्पदमाप्नुयात् ।
ब्रह्मणो दिवसस्यान्ते द्वितीयदिवसस्य च ॥१८॥

श्रीसुभगोवाच ।

पृच्छाम्येकं महाभाग योगीन्द्र शिवनन्दन ।
यदुक्त्वा नारदऋषिस्तत्र भागवतः परः ॥१९॥
नन्दः पञ्चविधः कृष्ण राधापञ्चविधा तथा ।
यशोदा पञ्चमी नित्या रोहिणी पञ्चमी ततः ॥२०॥
इति मे संशयो देव कुरुसन्देह भञ्जनः ।

श्रीगणेश उवाच ।

कृष्ण पञ्चविधो नन्दः सत्यं सत्यं न संशयः ॥२१॥
तृतीयदिवसस्यापि ब्रह्मणः परमेश्वरि ।
अनन्तगुणसंयुक्तं गोलोकवीजमव्ययम् ॥२२॥
गोलोकवीजसंस्पर्शात् कृष्णाद्याः पञ्चधा मताः ।
पञ्चाशन्मातृका वर्णा दुत्पन्ना विन्दुमण्डलात् ॥२३॥

श्रीगणेश उवाच ।

सद्योजातमुखे काम वीजमेवं जपेत् शिवः ।
कालिकेति पदं विप्र पुरुषः प्रजपेत् शिवः ॥२४॥

कामत्रयं तथेशान तथाचैवानिशं जपेत् ।
कूर्च्चद्वयं तथा मायां वह्निजायाञ्च तामस ॥२५॥
एतद्रहस्यं परमं ध्यात्वा जपफलं लभेत् ।
अन्यथा विफलं सर्व्वं पुरश्चर्य्यापि निष्फला ॥२६॥
उच्चारणं भवत्येषां चित्यादीनां न संशयः ।
परस्य ब्रह्मणोविप्र गुणाः पञ्चदशाक्षराः ॥२७॥
चतुर्वेदाक्षराः सर्व्वा अनिमाद्यष्टजातयः ।
राधा रहस्यं हे पुत्र राधा विलाससंयुतत् ॥२८॥
प्रतिमन्वन्तरं शस्तं पञ्चाशन्मातृका परम् ।
प्रतिमन्वन्तरे शस्तं विद्या मन्त्रं सुसिद्धिदम् ॥२९॥
गुरो रागमने शिष्यो गृहादपहरो भवेत् ।
नपुरश्चरणं विप्र नास्ति होमः कलौ युगे ॥३०॥
अभिषेको नास्ति विप्र तर्पणं नास्ति नास्ति वै ।
कलौ प्रवर्त्तते नित्यं सिद्धिदं गुरुतोषणम् ॥३१॥
गुरोः सन्तोषमात्रेण इष्टमन्त्रोऽपि सिद्ध्यति ।
विनागुणप्रमोदेन सिद्धिविद्यापि हानिदा ॥३२॥
यत् श्रुतं शिवषड्वक्त्रात्कथ्यतां कृपया मुने ।
किं बहूक्त्या महाभाग गच्छामि शिवमन्दिरम् ॥३३॥
इत्युक्त्वा प्रययौ शीघ्रं कैलासं शिवनन्दनः ।

इति श्रीकालीविलासतन्त्रे देवदेवीसंवादे गणेशमुनिकथनं नाम पञ्चविंशः

पटलः समाप्तः ।

समाप्तश्चायं ग्रन्थः ।

## शोधकनिवेकनम् ।

मतानैक्यान्निरादर्शात् बवयोर्भेदतोविना ।
वङ्गाक्षरभ्रान्तिपूर्णान् विलोक्यहस्तपुस्तकान् ।
यथाज्ञानं शोधितोऽयं धर्म्मग्रन्थोऽतिशङ्कितम् ।

---

